Digitized by Sarayu Trust Foundation Delhi and eGangotri.





ज्ञानमचिराल्लभते स्थिरम् ॥ प्रसीदति शिवस्तस्य यस्य ज्ञानं प्रतिष्ठितम् ॥ २० ॥ प्रसादात्परमो योगो यः शिवं चापरोक्षयेत् ॥
शिवापरोक्षात्संसारकारणेन वियुज्यते ॥२१॥ ततः स्यान्मुक्तसंसारो मुक्तः शिवसमो भवेत्॥ब्रह्मप्रोक्त इत्युपायः स एव पृथगुच्यते
॥२२॥ शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः ॥ संसारवैद्यः सर्वज्ञः परमात्मेति मुख्यतः ॥ २३ ॥ नामाष्टकमिदं मुख्यं शिवस्य
प्रतिपादकम् ॥ आद्यन्तु पञ्चकं ज्ञेयं शान्त्यतीताद्यनुक्रमात् ॥२४॥ संज्ञा सदाशिवादीनां पंचोपाधिपरिग्रहात् ॥ उपाधिविनिवृत्तौ
तु यथास्वं विनिवर्तते ॥२५॥ पदमेव हि तन्नित्यमनित्याः पदिनः स्मृताः ॥ पदानां प्रतिकृत्तौ तु मुच्यन्ते पदिनो यतः ॥ २६ ॥
परिवृत्त्यन्तरे भूयस्तत्पदप्राप्तिरुच्यते॥आत्मान्तराभिधानं स्याद्यदाद्यं नामपञ्चकम्॥२७॥अन्यत्तु त्रितयं नाम्नामुपादानादियोगतः॥
त्रिविधोपाधिवचनाच्छिव एवानुवर्तते॥२८॥अनादिमलसंश्लेषःप्रागभावात्स्वभावतः॥अत्यंतं परिशुद्धात्मेत्यतोऽयं शिव उच्यते२९॥
अथवाशेषकल्याणगुणैकधन ईश्वरः॥शिव इत्युच्यते सद्भिश्शिवतत्त्वार्थवादिभिः ॥३०॥ त्रयोविंशतितत्त्वेभ्यः प्रकृतिर्हि परा मता॥
प्रकृतेस्तु परं प्राहुः पुरुषं पञ्चविंशकम् ॥३१॥ यं वेदादौ स्वरं प्राहुर्वाच्यवाचकभावतः॥वेदैकवेद्ययाथात्म्याद्वेदान्ते च प्रतिष्ठितः ॥
॥३२॥ तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ॥ तदधीनप्रवृत्तित्वात्प्रकृतेः पुरुषस्य च ॥ ३३ ॥ अथवा त्रिगुणं तत्त्वमुपेयमिद
मव्ययम् ॥ मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्॥३४॥मायाविक्षोभकोऽनंतो महेश्वरसमन्वयात् ॥ कालात्मा परमात्मादिः
स्थूलः सूक्ष्मः प्रकीर्तितः ॥३५॥ रुदुःखं दुःखहेतुर्वा तद्द्रावयति नः प्रभुः ॥ रुद्र इत्युच्यते सद्भिः शिवः परमकारणम् ॥ ३६ ॥
तत्त्वादिभूतपर्यन्तं शरीरादिष्वतन्द्रितः ॥ व्याप्याधितिष्ठति शिवस्ततो रुद्र इतस्ततः ॥३७॥ जगतः पितृभूतानां शिवो मूर्त्यात्म
नामपि ॥ पितृभावेन सर्वेषां पितामह उदीरितः ॥३८॥ निदानज्ञो यथा वैद्यो रोगस्य विनिवर्तकः ॥ उपायैर्भेषजैस्तद्वल्लयभोगाधि
कारतः ॥३९॥ संसारस्येश्वरो नित्यं समूलस्य निवर्तकः ॥ संसारवैद्य इत्युक्तः सर्वतत्त्वार्थवेदिभिः ॥ ४० ॥ दशार्थज्ञानसिद्ध्यर्थ
मिन्द्रियेष्वेषु सत्स्वपि ॥ त्रिकालभाविनो भावान्स्थूलान्सूक्ष्मानशेषतः ॥४१॥ अणवो नैव जानन्ति माययैव मलावृताः ॥ अस



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

त्स्वपि च सर्वेषु सर्वार्थज्ञानहेतुषु ॥ ४२ ॥ यद्यथावस्थितं वस्तु तत्तथैव सदाशिवः ॥ अयत्नेनैव जानाति तस्मात्सर्वज्ञ उच्यते ॥ ॥४३॥ सर्वात्मा परमैरेभिर्गुणैर्नित्यसमन्वयात् ॥ स्वस्मात्परात्मविरहात्परमात्मा शिवः स्वयम् ॥ ४४ ॥ नामाष्टकमिदं चैव लब्ध्वाचार्यप्रसादतः ॥ निवृत्त्यादिकलाग्रन्थिं शिवाद्यैः पंचनामभिः ॥ ४५ ॥ यथास्वं क्रमशश्छित्त्वा शोधयित्वा यथागुणम् ॥ गुणितैरेव सोद्घातैरनिरुद्धैरथापि वा ॥ ४६ ॥ हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रसमन्विताम् ॥ छित्त्वा पुर्यष्टकाकारं स्वात्मानं च सुषुम्णया ॥ ४७ ॥ द्वादशांतःस्थितस्येन्दोर्नीत्वोपरि शिवौजसि ॥ संहृत्यं वदनं पश्चाद्यथासंस्करणं लयात् ॥ ४८ ॥ शाक्तेनामृतवर्षेण संसिक्तायां तनौ पुनः ॥ अवतार्य स्वमात्मानममृतात्माकृतिं हृदि ॥ ४९ ॥ द्वादशांतःस्थितस्येन्दोः परस्ताच्छ्वेतपंकजे ॥ समासीनं महादेवं शंकरम्भक्तवत्सलम् ॥५०॥ अर्द्धनारीश्वरं देवं निर्मलं मधुराकृतिम् ॥ शुद्धस्फटिकसंकाशं प्रसन्नं शीतलद्युतिम् ॥५१॥ ध्यात्वा हि मानसे देवं स्वस्थचित्तोऽथ मानवः ॥ शिवनामाष्टकेनैव भावपुष्पैस्समर्चयेत् ॥ ५२ ॥ अभ्यर्चनान्ते तु पुनः प्राणानायम्य मानवः ॥ सम्यक्चित्तं समाधाय शार्वं नामाष्टकं जपेत् ॥ ५३ ॥ नाभौ चाष्टाहुतीर्हुत्वा पूर्णाहुत्या नमस्ततः ॥ अष्टपुष्पप्रदानेन कृत्वाभ्यर्च्चनमंतिमम् ॥५४॥ निवेदयेत्स्वमात्मानं चुलुकोदकवर्त्मना ॥ एवं कृत्वा चिरादेव ज्ञानं पाशुपतं शुभम् ॥५५॥ लभते तत्प्रतिष्ठां च वृत्तं चानुत्तमं तथा ॥ योगं च परमं लब्ध्वा मुच्यते नात्र संशयः ॥५६॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखंडे श्रेष्ठानुष्ठानवर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

ऋषय ऊचुः ॥ भगवञ्छ्रोतुमिच्छामो व्रतं पाशुपतं परम् ॥ ब्रह्मादयोऽपि यत्कृत्वा सर्वे पाशुपताः स्मृताः ॥ १ ॥ ॥ वायुरुवाच ॥ रहस्यं वः प्रवक्ष्यामि सर्वपापनिकृन्तनम् ॥ व्रतं पाशुपतं श्रौतमथर्वशिरसि श्रुतम् ॥२॥ कालश्चैत्री पौर्णमासी देशः शिवपरिग्रहः ॥ क्षेत्रारामाद्यरण्यं वा प्रशस्तश्शुभलक्षणः ॥३॥ तत्र पूर्वं त्रयोदश्यां सुस्नातः सुकृताह्निकः ॥ अनुज्ञाप्य स्वमाचार्यं संपूज्य प्रणिपत्य च ॥ ४ ॥ पूजां वैशेषिकीं कृत्वा शुक्लांबरधरः स्वयम् ॥ शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥ ५ ॥ दर्भासने समासीनो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





दर्भमुष्टिं प्रगृह्य च ॥ प्राणायामत्रयं कृत्वा प्राङ्मुखो वाप्युदङ्मुखः ॥ ध्यात्वा देवं च देवीं च तद्विज्ञापनवर्त्मना ॥ ६ ॥ व्रतमेतत्करोमीति भवेत्संकल्प्य दीक्षितः ॥ यावच्छरीरपातं वा द्वादशाब्दमथापि वा ॥ ७ ॥ तदर्धं वा तदर्धं वा मासद्वादशकं तु वा ॥ तदर्धं वा तदर्धं वा मासमेकमथापि वा ॥ ८ ॥ दिनद्वादशकं वाऽथ दिनषट्कमथापि वा ॥ तदर्धं दिनमेकं वा व्रतसंकल्पनावधि ॥९॥ अग्निमाधाय विधिवद्विरजाहोमकारणात् ॥ हुत्वाज्येन समिद्भिश्च चरुणा च यथाक्रमम् ॥१०॥ पूर्णामापूर्य तां भूयस्तत्त्वानां शुद्धिमुद्दिशन् ॥ जुहुयान्मूलमन्त्रेण तैरेव समिदादिभिः ॥ ११ ॥ तत्त्वान्येतानि मद्देहे शुद्ध्यंतां[1]मित्यनुस्मरन्॥पञ्चभूतानि तन्मात्राः पञ्चकर्मेन्द्रियाणि च ॥ १२ ॥ ज्ञानकर्मविभेदेन पञ्चकर्मविभागशः ॥ त्वगादिधातवस्सप्त पञ्च प्राणादिवायवः॥१३॥मनो बुद्धिरहं ख्यातिर्गुणाः प्रकृतिपूरुषौ ॥ रागो विद्याकले चैव नियतिः काल एव च॥१४॥माया च शुद्धिविद्या च महेश्वरसदाशिवौ ॥ शक्तिश्च शिवतत्त्वं च तत्त्वानि क्रमशो विदुः ॥१५॥ मन्त्रैस्तु विरजैर्हुत्वा होतासौ विरजा भवेत् ॥ शिवानुग्रहमासाद्य ज्ञानवान्स हि जायते॥१६॥अथ गोमयमादाय पिण्डीकृत्याभिमंत्र्य च॥विन्यस्याग्नौ च सम्प्रोक्ष्य दिने तस्मिन्हविष्यभुक्॥१७॥प्रभाते तु चतुर्दश्यां कृत्वा सर्वं पुरोदितम् ॥ दिने तस्मिन्निराहारः कालं शेषं समापयेत् ॥१८॥ प्रातः पर्वणि चाप्येवं कृत्वा होमावसानतः॥उपसंहृत्य रुद्राग्निं गृह्णीयाद्भस्म यत्नतः ॥१९॥ ततश्च जटिलो मुण्डी शिखैकजट एव वा॥भूत्वा स्नात्वा ततो वीतलज्जश्चेत्स्याद्दिगम्बरः ॥२०॥ अपि काषायवसनश्चर्मचीराम्बरोऽथ वा ॥ एकाम्बरो वल्कली वा भवेद्दण्डी च मेखली ॥२१॥ प्रक्षाल्य चरणौ पश्चाद्द्विराचम्यात्मनस्तनुम् ॥ संकुलीकृत्य तद्भस्म विरजानलसंभवम् ॥२२॥ अग्निरित्यादिभिर्मंत्रैः षड्भिराथर्वणैः क्रमात् ॥ विभृज्यांगानि मूर्द्धादिचरणांतानि तैस्स्पृशेत्॥२३॥ ततस्तेन क्रमेणैव समुद्धृत्य च भस्मना॥सर्वांगोद्धूलनं कुर्यात्प्रणवेन शिवेन वा॥२४॥ ततस्त्रिपुण्ड्रं रचयेत्त्रियायुषसमाह्वयम्॥शिवभावं समागम्य शिवयोगमथाचरेत्॥२५॥कुर्यात्त्रिसन्ध्य मप्येवमेतत्पाशुपतं व्रतम् ॥

[1] आत्मनेपदमार्षम् ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

भुक्तिमुक्तिप्रदं चैतत्पशुत्वं विनिवर्तयेत्॥२६॥तत्पशुत्वं परित्यज्य कृत्वा पाशुपतं व्रतम्॥पूजनीयो महादेवो लिंगमूर्तिस्सनातनः२७॥ पद्ममष्टदलं हैमं नवरत्नैरलंकृतम् ॥ कर्णिकाकेशरोपेतमासनं परिकल्पयेत् ॥ २८ ॥ विभवे तदभावे तु रक्तं सितमथापि वा॥पद्मं तस्याप्यभावे तु केवलं भावनामयम्॥२९॥तत्पद्मकर्णिकामध्ये कृत्वा लिंगं कनीयसम् ॥ स्फाटिकं पीठिकोपेतं पूजयेद्विधिवत्क्रमात् ॥ ३० ॥ प्रतिष्ठाप्य विधानेन तल्लिंगं कृतशोधनम् ॥ परिकल्प्यासनं मूर्तिं पंचवक्त्रप्रकारतः ॥३१॥ पंचगव्यादिभिः पूर्णैर्यथाविभवसंभृतैः ॥ स्नापयेत्कलशैः पूर्णैरष्टापदसमुद्भवैः ॥३२॥ गंधद्रव्यैस्सकर्पूरैश्चन्दनाद्यैस्सकुंकुमैः॥सवेदिकं समालिप्य लिंगं भूषणभूषितम् ॥ ३३ ॥ बिल्वपत्रैश्च पद्मैश्च रक्तैः श्वेतैस्तथोत्पलैः ॥ नीलोत्पलैस्तथान्यैश्च पुष्पैस्तैस्तैस्सुगंधिभिः ॥ ३४ ॥ पुण्यैः प्रशस्तैः पत्रैश्च चित्रैर्दूर्वाक्षतादिभिः ॥ समभ्यर्च्य यथालाभं महापूजाविधानतः ॥ ३५ ॥ धूपं दीपं तथा चापि नैवेद्यं च समादिशेत् ॥ निवेदयित्वा विभवे कल्याणं च समाचरेत् ॥ ३६ ॥ इष्टानि च विशिष्टानि न्यायेनोपार्जितानि च॥सर्वद्रव्याणि देयानि व्रते तस्मिन्विशेषतः ॥ ३७ ॥ श्रीपत्रोत्पलपद्मानां संख्या साहस्रिकी मता ॥ प्रत्येकमपरा संख्या शतमष्टोत्तरं द्विजाः ॥ ३८ ॥ तत्रापि च विशेषेण न त्यजेद्बिल्वपत्रकम् ॥ हैममेकं परं प्राहुः पद्मं पद्मसहस्रकात् ॥ ३९ ॥ नीलोत्पलादिष्वप्येतत्समानं बिल्वपत्रकैः ॥ पुष्पान्तरे न नियमो यथालाभं निवेदयेत् ॥ ४० ॥ अष्टाङ्गमर्घ्यमुत्कृष्टं धूपालेपौ विशेषतः॥ चन्दनं वामदेवाख्ये हरितालं च पौरुषे ॥ ४१ ॥ ईशाने भसितं केचिदालेपनमितीदृशम् ॥ न धूपमिति मन्यन्ते धूपान्तरविधानतः ॥ सितागुरुमघोराख्ये मुखे कृष्णागुरुं पुनः ॥ ४२ ॥ पौरुषे गुग्गुलं सव्ये सौम्ये सौगंधिकं मुखे ॥ ईशानेऽपि ह्युशीरादि देयाद्धूपं विशेषतः॥ ॥ ४३ ॥ शर्करामधुकर्पूरकपिलाघृतसंयुतम् ॥ चंदनागुरुकाष्ठाद्यं सामान्यं संप्रचक्षते ॥ ४४ ॥ कर्पूरवर्तिराज्याढ्या देया दीपावलिस्ततः ॥ अर्घ्यमाचमनं देयं प्रतिवक्त्रमतः परम् ॥४५॥ प्रथमावरणे पूज्यो क्रमाद्धेरम्बषण्मुखौ ॥ ब्रह्मांगानि ततश्चैव प्रथमावरणेऽर्चिते ॥ ४६ ॥ द्वितीयावरणे पूज्या विघ्नेशाश्चक्रवर्तिनः ॥ तृतीयावरणे पूज्या भवाद्या अष्टमूर्तयः ॥ ४७ ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





महादेवादयस्तत्र तथैकादशमूर्तयः ॥ चतुर्थावरणे पूज्याः सर्व एव गणेश्वराः ॥४८॥ बहिरेव तु पद्मस्य पंचमावरणे क्रमात् ॥ दश दिक्पतयः पूज्याः साम्राः सानुचरास्तथा॥४९॥ब्रह्मणो मानसाः पुत्राः सर्वेऽपि ज्योतिषां गणाः॥ सर्वा देव्यश्च देवाश्च सर्वे सर्वे च खेचराः ॥५०॥ पातालवासिनश्चान्ये सर्वे मुनिगणा अपि ॥ योगिनो हि सखास्सर्वे पतंगा मातरस्तथा ॥ ५१ ॥ क्षेत्रपालाश्च सगणाः सर्वं चैतच्चराचरम् ॥ पूजनीयं शिवप्रीत्या मत्त्वा शंभुविभूतिमत् ॥५२॥ अथावरणपूजांते संपूज्य परमेश्वरम्॥साज्यं सव्यंजनं हृद्यं हविर्भक्त्या निवेदयेत् ॥५३॥ मुखवासादिकं दत्त्वा ताम्बूलं सोपदंशकम् ॥ अलंकृत्य च भूयोऽपि नानापुष्पविभूषणैः॥ ॥ ५४ ॥ नीराजनांते विस्तीर्य पूजाशेषं समापयेत् ॥ चषकं सोपकारं च शयनं च समर्पयेत् ॥५५॥ चन्द्रसंकाशहारं च शयनीयं समर्पयेत् ॥ आद्यं नृपोचितं हृद्यं तत्सर्वमनुरूपतः ॥५६॥ कृत्वा च कारयित्वा च हित्वा च प्रतिपूजनम् ॥ स्तोत्रं व्यपोहनं जप्त्वा विद्यां पंचाक्षरीं जपेत् ॥ ५७ ॥ प्रदक्षिणां प्रणामं च कृत्वात्मानं समर्पयेत् ॥ ततः पुरस्ताद्देवस्य गुरुविप्रौ च पूजयेत् ॥ ५८ ॥ दत्त्वार्घ्यमष्टौ पुष्पाणि देवमुद्वास्य लिंगतः ॥ अग्नेश्चाग्निं सुसंयम्य ह्युद्वास्य च तमप्युत ॥५९॥ प्रत्यहं च जनस्त्वेवं कुर्यात्सेवां पुरोदिताम् ॥ ततस्तत्साम्बुजं लिंगं सर्वोपकरणान्वितम्॥६०॥ समर्पयेत्स्वगुरवे स्थापयेद्वा शिवालये॥संपूज्य च गुरून्विप्रान्व्रतिनश्च विशेषतः ॥६१॥ भक्तान्द्विजांश्च शक्तश्चेद्दीनानाथांश्च तोषयेत् ॥ स्वयं चानशने शक्तः फलमूलाशनोऽथ वा ॥६२॥ पयोव्रतो वा भिक्षाशी भवेदेकाशनस्तथा ॥ नक्तं युक्ताशनो नित्यं भूशय्यानिरतः शुचिः॥६३॥भस्मशायी तृणेशायी चीराजिनधृतोऽथ वा ॥ ब्रह्मचर्यव्रतो नित्यं व्रतमेतत्समाचरेत् ॥६४॥अर्कवारे तथार्द्रायां पंचदश्यां च पक्षयोः॥अष्टम्यां च चतुर्दश्यां शक्तस्तूपवसेदपि ॥६५॥ पाखण्डिपतितोदक्यास्सूतकान्त्यजपूर्वकान् ॥ वर्जयेत्सर्वयत्नेन मनसा कर्मणा गिरा ॥ ६६ ॥ क्षमादानदयासत्याहिंसाशीलः सदा भवेत् ॥ संतुष्टश्च प्रशान्तश्च जपध्यानरतस्तथा ॥६७॥ कुर्यात्त्रिषवणस्नानं भस्मस्नानमथापि वा॥पूजां वैशेषिकीं चैव मनसा वचसा गिरा ॥ ६८ ॥ बहुनात्र किमुक्तेन नाचरेदशिवं व्रती ॥ प्रमादात्तु तथाचारे निरूप्य गुरुलाघवे ॥ ६९ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

उचितां निष्कृतिं कुर्यात्पूजाहोमजपादिभिः ॥ आसमाप्तेर्व्रतस्यैवमाचरेन्न प्रमादतः ॥ ७० ॥ गोदानं च वृषोत्सर्गं कुर्यात्पूजां च संपदा ॥ भक्तश्च शिवप्रीत्यर्थं सर्वकामविवर्जितः ॥ ७१ ॥ सामान्यमेतत्कथितं व्रतस्यास्य समासतः ॥ प्रतिमासं विशेषं च प्रवदामि यथाश्रुतम् ॥ ७२ ॥ वैशाखे वज्रलिंगं तु ज्येष्ठे मारकतं शुभम् ॥ आषाढे मौक्तिकं विद्याच्छ्रावणे नीलनिर्मितम् ॥ ७३ ॥ मासे भाद्रपदे चैव पद्मरागमयं परम् ॥ आश्विने मासि विद्याद्वै लिंगं गोमेदकं वरम् ॥७४॥ कार्तिक्यां वैद्रुमं लिंगं वैदूर्यं मार्गशीर्षके ॥ पुष्परागमयं पौषे माघे द्युमणिजन्तथा ॥७५॥ फाल्गुने चन्द्रकान्तोत्थं चैत्रे तद्व्यत्ययोथ वा ॥ सर्वमासेषु रत्नानामलाभे हैममेव वा ॥७६॥ हैमाभावे राजतं वा ताम्रजं शैलजन्तथा ॥ मृन्मयं वा यथालाभं जातुषं चान्यदेव वा ॥७७॥ सर्वगंधमयं वाथ लिंगं कुर्याद्यथारुचि ॥ व्रतावसानसमये समाचरितनित्यकः ॥७८॥ कृत्वा वैशेषिकीं पूजां हुत्वा चैव यथा पुरा ॥ संपूज्य च तथाचार्यं व्रतिनश्च विशेषतः ॥७९॥ देशिकेनाप्यनुज्ञातः प्राङ्मुखो वाप्युदङ्मुखः ॥ दर्भासनो दर्भपाणिः प्राणापानौ नियम्य च ॥ ८० ॥ जपित्वा शक्तितो मूलं ध्यात्वा साम्बं त्रियम्बकम् ॥ अनुज्ञाप्य यथापूर्वं नमस्कृत्य कृताञ्जलिः ॥८१॥ समुत्सृजामि भगवन्व्रतमेतत्त्वदाज्ञया ॥ इत्युक्त्वा लिंगमूलस्थान्दर्भानुत्तरतस्त्यजेत् ॥८२॥ ततो दण्डजटाचीरमेखला अपि चोत्सृजेत् ॥ पुनराचम्य विधिवत्पंचाक्षरमुदीरयेत् ॥ ८३ ॥ यः कृत्वात्यंतिकीं दीक्षामादेहान्तमनाकुलः ॥ व्रतमेतत्प्रकुर्वीत स तु वै नैष्ठिकः स्मृतः ॥ ८४ ॥ सोऽत्याश्रमी च विज्ञेयो महापाशुपतस्तथा ॥ स एव तपतां श्रेष्ठ स एव च महाव्रती ॥ ८५ ॥ न तेन सदृशः कश्चित्कृतकृत्यो मुमुक्षुषु ॥ यो यतिर्नैष्ठिको जातस्तमाहुर्नैष्ठिकोत्तमम् ॥ ८६ ॥ योऽन्वहं द्वादशाहं वा व्रतमेतत्समाचरेत् ॥ सोऽपि नैष्ठिकतुल्यः स्यात्तीव्रव्रतसमन्वयात् ॥८७॥ घृताक्तो यश्चरेदेतद्व्रतं व्रतपरायणः ॥ द्वित्रैकदिवसं वापि स च कश्चन नैष्ठिकः ॥ ८८ ॥ कृत्यमित्येव निष्कामो यश्चरेद्व्रतमुत्तमम् ॥ शिवार्पितात्मा सततं न तेन सदृशः क्वचित् ॥ ८९ ॥ भस्मच्छन्नो द्विजो विद्वान्महापातकसंभवैः ॥ पापैस्सुदारुणैस्सद्यो मुच्यते नात्र संशयः ॥ ९० ॥ रुद्राग्निर्यत्पर वीर्य्यन्तद्भस्म परिकीर्तितम् ॥ तस्मात्सर्वेषु कालेषु



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वीर्यवान्भस्मसंयुतः ॥ ९१ ॥ भस्मनिष्ठस्य नश्यन्ति दोषा भस्माग्निसंगमात् ॥ भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ॥ ९२ ॥ भस्मना दिग्धसर्वांगो भस्मदीप्तत्रिपुंड्रकः ॥ भस्मस्नायी च पुरुषो भस्मनिष्ठ इति स्मृतः ॥ ९३ ॥ भूतप्रेतपिशाचाश्च रोगाश्चातीव दुस्सहाः ॥ भस्मनिष्ठस्य सान्निध्याद्विद्रवंति न संशयः ॥ ९४ ॥ भासनाद्भसितं प्रोक्तं भस्म कल्मषभक्षणात् ॥ भूतिभूतिकरी चैव रक्षा रक्षाकरी परम् ॥ ९५ ॥ किमन्यदिह वक्तव्यं भस्ममाहात्म्यकारणम् ॥ व्रती च भस्मना स्नातस्स्वयं देवो महेश्वरः ॥ ९६ ॥ परमास्त्रं च शैवानां भस्मैतत्पारमेश्वरम् ॥ धौम्याग्रजस्य तपसि व्यापदो यन्निवारिताः ॥ ९७ ॥ तस्मात्सर्वप्रयत्नेन कृत्वा पाशुपतव्रतम् ॥धनवद्भस्म संगृह्य भस्मस्नानरतो भवेत्॥९८॥इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे पशुपतिव्रतविधानवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥ ऋषय ऊचुः ॥ धौम्याग्रजेन शिशुना क्षीरार्थं हि तपः कृतम् ॥ तस्मात् क्षीरार्णवो दत्तस्तस्मै देवेन शूलिना ॥ १ ॥ स कथं शिशुको लेभे शिवशास्त्रप्रवक्तृताम् ॥ कथं वा शिवसद्भावं ज्ञात्वा तपसि निष्ठितः ॥ २ ॥ कथं च लब्धविज्ञानस्तपश्चरणपर्वणि ॥ रुद्राग्नेर्यत्परं वीर्यं लभे भस्म स्वरक्षकम् ॥ ३ ॥ ॥ वायुरुवाच ॥ न ह्येष शिशुकः कश्चित्प्राकृतः कृतवांस्तपः ॥ मुनिवर्यस्य तनयो व्याघ्रपादस्य धीमतः ॥ ४ ॥ जन्मान्तरेण ससिद्धः केनापि खलु हेतुना ॥ स्वपदप्रच्युतो दिष्ट्या प्राप्तो मुनिकुमारताम् ॥ ५ ॥ महादेवप्रसादस्य भाग्यापन्नस्य भाविनः ॥ दुग्धाभिलाषप्रभवद्वारतामगमत्तपः ॥ ६ ॥ अतः सर्वगणेशत्वं कुमारत्वं च शाश्वतम् ॥ सह दुग्धाब्धिना तस्मै प्रददौ शंकरः स्वयम् ॥७॥ तस्य ज्ञानागमोप्यस्य प्रसादादेव शांकरात् ॥ कौमारं हि परं साक्षाज्ज्ञानं शक्तिमयं विदुः ॥८॥ शिवशास्त्रप्रवक्तृत्वमपि तस्य हि तत्कृतम् ॥ कुमारो मुनितो लब्धज्ञानाब्धिरिव नन्दनः ॥ ९ ॥ दृष्टं तु कारणं तस्य शिवज्ञानसमन्वये ॥ स्वमातृवचनं साक्षाच्छोकजं क्षीरकारणात् ॥१०॥ कदाचित्क्षीरमत्यल्पं पीतवान्मातुलाश्रमे ॥ इर्ष्यया मातुलसुतं संतृप्तक्षीरमुत्तमम् ॥ ११ ॥ पीत्वा स्थितं यथाकामं दृष्ट्वा वै मातुलात्मजम् ॥ उपमन्युर्व्याघ्रपादिः प्रीत्या प्रोवाच मातरम् ॥ १२ ॥ उपमन्युरुवाच ॥ मात





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

मातर्महाभागे मम देहि तपस्विनि ॥ गव्यं क्षीरमतिस्वादु नाल्पमुष्णं पिबाम्यहम् ॥ १३ ॥ वायुरुवाच ॥ तच्छ्रुत्वा पुत्रवचनं तन्माता च तपस्विनी ॥ व्याघ्रपादस्य महिषी दुःखमापत्तदा च सा ॥ १४ ॥ उपलाल्याथ सुप्रीत्या पुत्रमालिंग्य सादरम् ॥ दुःखिता विललापाथ स्मृत्वा नैर्धन्यमात्मनः ॥ १५ ॥ स्मृत्वास्मृत्वा पुनः क्षीरमुपमन्युस्स बालकः ॥ देहिदेहीति तामाह रुदन्भूयो महाद्युतिः ॥ १६ ॥ तद्धठं सा परिज्ञाय द्विजपत्नी तपस्विनी ॥ शान्तये तद्धठस्याथ शुभोपायमरीरचत् ॥ १७ ॥ उञ्छवृत्त्यार्जितान्बीजान्स्वयं दृष्ट्वा च सा तदा ॥ बीजपिष्टमथालोड्य तोयेन कलभाषिणी ॥१८॥ एह्येहि मम पुत्रेति सामपूर्वं ततस्सुतम् ॥ आलिंग्यादाय दुःखार्ता प्रददौ कृत्रिमं पयः ॥ १९ ॥ पीत्वा च कृत्रिमं क्षीरं मात्रां दत्तं स बालकः ॥ नैतत्क्षीरमिति प्राह मातरं चातिविह्वलः ॥२०॥ दुःखिता सा तदा प्राह संप्रेक्ष्याघ्राय मूर्द्धनि॥समार्ज्य नेत्र पुत्रस्य कराभ्यां कमलायते ॥ २१ ॥ ॥ जनन्युवाच ॥ तटिनी रत्नपूर्णास्तास्स्वर्गपातालगोचराः ॥ भाग्यहीना न पश्यन्ति भक्तिहीनाश्च ये शिवे ॥ २२ ॥ राज्यं स्वर्गं च मोक्षं च भोजनं क्षीरसंभवम् ॥ न लभन्ते प्रियाण्येषां न तुष्यति यदा शिवः ॥ २३ ॥ भवप्रसादजं सर्वं नान्यदेवप्रसादजम् अन्य देवेषु निरता दुःखार्ता विभ्रमन्ति च ॥ २४ ॥ क्षीरं तत्र कुतोऽस्माकं वने निवसतां सदा ॥ क्व दुग्धसाधनं वत्स क्व वयं वनवासिनः ॥ २५ ॥ कृत्स्नाभावेन दारिद्र्यान्मया ते भाग्यहीनया ॥ मिथ्यादुग्धमिदं दत्तम्पिष्टमालोड्य वारिणा ॥ २६ ॥ त्वं मातुलगृहे स्वल्पं पीत्वा स्वादु पयः शृतम् ॥ ज्ञात्वा स्वादु त्वया पीतं तज्जातीयमनुस्मरन् ॥२७॥ दत्तं न पय इत्युक्त्वा रुदन् दुःखीकरोषिमाम् ॥ प्रसादेन विना शंभो पयस्तव न विद्यते ॥ २८ ॥ पादपंकजयोस्तस्य साम्बस्य सगणस्य च ॥ भक्त्या समर्पितं यत्तत्कारणं सर्वसम्पदाम् ॥ २९ ॥ अधुना वसुदोस्माभिर्महादेवो न पूजितः ॥ सकामानां यथाकामं यथोक्तफलदायकः ॥३०॥ धनान्युद्दिश्य नास्माभिरितः प्रागर्चित शिवः ॥अतो दरिद्रास्संजाता वयं तस्मान्न ते पयः ॥ ३१ ॥ पूर्वजन्मनि यद्दत्तं शिवमुद्दिश्य वै सुत ॥ तदेव लभ्यते नान्यद्विष्णुमुद्दिश्य वा प्रभुम् ॥३२॥ वायुरुवाच ॥ इति मातृवचः श्रुत्वा तथ्यं शोकादिसूचकम् ॥ बालो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





ऽप्यनुतपन्नंतः प्रगल्भमिदमब्रवीत् ॥३३॥ उपमन्युरुवाच ॥ शोकेनालमितो मातः सांबो यद्यस्ति शंकरः ॥ त्यज शोकं महाभागे सर्वं भद्रं भविष्यति ॥३४॥ शृणु मातर्वचो मेद्य महादेवोऽस्ति चेत्क्वचित् ॥ चिराद्वा ह्यचिराद्वापि क्षीरोदं साधयाम्यहम् ॥ ३५॥ वायुरुवाच ॥ इति श्रुत्वा वचस्तस्य बालकस्य महामतेः ॥ प्रत्युवाच तदा माता सुप्रसन्ना मनस्विनी ॥ ३६ ॥ मातोवाच ॥ शुभं विचारितं तात त्वया मत्प्रीतिवर्द्धनम् ॥ विलंबं मा कृथास्त्वं हि भज सांबं सदाशिवम् ॥३७॥ सर्वस्मादधिकोऽस्त्येव शिवः परमकारणम् ॥ तत्कृतं हि जगत्सर्वं ब्रह्माद्यास्तस्य किंकराः ॥३८॥ तत्प्रसादकृतैश्वर्या दासास्तस्य वयं प्रभोः ॥ तं विनान्यं न जानीमश्शंकरं लोकशंकरम् ॥ ३९ ॥ अन्यान्देवान्परित्यज्य कर्मणा मनसा गिरा ॥ तमेव सांबं सगणं भज भावपुरस्सरम् ॥ ४० ॥ तस्य देवाधिदेवस्य शिवस्य वरदायिनः॥ साक्षान्नमश्शिवायेति मंत्रोऽयं वाचकः स्मृतः ॥ ४१ ॥ सप्तकोटिमहामंत्राः सर्वे सप्रणवाः परे ॥ तस्मिन्नेव विलीयंते पुनस्तस्माद्विनिर्गताः ॥ ४२ ॥ सप्रसादाश्च ते मंत्राः स्वाधिकाराद्यपेक्षया ॥ सर्वाधिकारस्त्वेकोऽयं मंत्र एवेश्वराज्ञया ॥ ४३ ॥ यथा निकृष्टानुत्कृष्टान्सर्वानप्यात्मनः शिवः ॥ क्षमते रक्षितुं तद्वन्मंत्रोऽयमपि सर्वदा ॥ ४४ ॥ प्रबलश्च तथा ह्येष मंत्रो मन्त्रान्तरादपि ॥ सर्वरक्षाक्षमोऽप्येष नापरः कश्चिदिष्यते ॥ ४५ ॥ तस्मान्मन्त्रान्तरांस्त्यक्त्वा पंचाक्षरपरो भव ॥ तस्मिञ्जिह्वांतरगते न किंचिदिह दुर्लभम् ॥ ४६ ॥ अघोरास्त्रं च शैवानां रक्षाहेतुरनुत्तमम् ॥ तच्च तत्प्रभवं मत्वा तत्परो भव नान्यथा ॥ ४७ ॥ भस्मेदन्तु मया लब्धं पितुरेव तवोत्तमम् ॥ विरजानलसंसिद्धं महाव्यापन्निवारणम् ॥४८॥ मंत्रं च ते मया दत्तं गृहाण मदनुज्ञया ॥ अनेनैवाशु जप्तेन रक्षा तव भविष्यति ॥ ४९ ॥ वायुरुवाच ॥ एवं मात्रा समादिश्य शिवमस्त्वित्युदीर्य च ॥ विसृष्टस्तद्वचो मूर्ध्नि कुर्वन्नेव तदा मुनिः ॥ ५० ॥ तां प्रणम्यैवमुक्त्वा च तपः कर्तुं प्रचक्रमे ॥ तमाह च तदा माता शुभं कुर्वंतु ते सुराः ॥५१॥ अनुज्ञातस्तया तत्र तपस्तेपे स दुश्चरम् ॥ हिमवत्पर्वतं प्राप्य वायुभक्षः समाहितः ॥५२॥ अष्टेष्टकाभिः प्रसादं कृत्वा लिंगं च मृन्मयम् ॥ तत्रावाह्य महादेवं सांबं सगणम



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

व्ययम् ॥९३॥ भक्त्या पञ्चाक्षरेणणैव पत्रैः पुष्पैर्वनोद्भवैः॥समभ्यर्च्य चिरं कालं चचार परमं तपः॥९४॥ततस्तपश्चरत्तं तं बालमेका किनं कृशम् ॥ उपमन्युं द्विजवरं शिवसंसक्तमानसम् ॥९५॥ पुरा मरीचिना शप्ताः केचिन्मुनिपिशाचकाः ॥ संपीड्य राक्षसैर्भावैस्त पसोविघ्नमाचरन्॥९६॥स च तैः पीड्यमानोऽपि तपः कुर्वन्कथञ्चन ॥ सदा नमः शिवायेति क्रोशति स्मार्तनादवत ॥९७॥ तन्नाद श्रवणादेव तपसो विघ्नकारिणः ॥ ते तं बालं समुत्सृज्य मुनयस्समुपाचरन् ॥ ९८ ॥ तपसा तस्य विप्रस्य चोपमन्योर्महात्मनः ॥ चराचरं च मुनयः प्रदीपितमभूज्जगत् ॥९९॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायां पूर्वखण्डे उपमन्युतपोवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥३४॥ वायुरुवाच ॥ अथ सर्वे प्रदीप्तांगा वैकुण्ठं प्रययुर्द्रुतम् ॥ प्रणम्याहुश्च तत्सर्वं हरये देवसत्तमाः ॥ १ ॥ श्रुत्वा तेषां तदा वाक्यं भगवान्पुरुषोत्तमः ॥ किमिदन्त्विति संचिन्त्य ज्ञात्वा तत्कारणं च सः ॥ २ ॥ जगाम मन्दरं तूर्णं महेश्वर दिदृक्षया ॥ दृष्ट्वा देवं प्रणम्यैवं प्रोवाच सुकृतांजलिः॥३॥विष्णुरुवाच॥ भगवन्ब्राह्मणः कश्चिदुपमन्युरिति श्रुतः ॥ क्षीरार्थमदहत्सर्वं तपसा तन्निवारय ॥ ४ ॥ वायुरुवाच ॥ इति श्रुत्वा वचो विष्णोः प्राह देवो महेश्वरः॥ शिशुं निवारयिष्यामि तत्त्वं गच्छ स्वमाश्र मम् ॥ ५ ॥ तच्छ्रुत्वा शंभुवचनं स विष्णुर्देववल्लभः ॥ जगामाश्वास्य तान्सर्वान्स्वलोकममरादिकान् ॥ ६ ॥ एतस्मिन्नंतरे देवः पिनाकी परमेश्वरः ॥ शक्रस्य रूपमास्थाय गन्तुं चक्रे मतिं ततः ॥ ७ ॥ अथ जगाम मुनेस्तु तपोवनं गजवरेण सितेन सदा शिवः ॥ सह सुरासुरसिद्धमहोरगैरमरराजतनुं स्वयमास्थितः ॥ ८ ॥ स वारणश्चारु तदा विभुं तं निवीज्य वालव्यजनेन दिव्यम् ॥ दधार शच्या सहितं सुरेंद्रं करेण वामेन शितातपत्रम् ॥ ९ ॥ रराज भगवान्सोमः शक्ररूपी सदाशिवः ॥ तेनातपत्रेण यथा चन्द्रबिंबेन मन्दरः ॥ १० ॥ आस्थायैवं हि शक्रस्य स्वरूपं परमेश्वरः ॥ जगामानुग्रहं कर्तुमुपमन्योस्तदाश्रमम् ॥ ११ ॥ तं दृष्ट्वा परमेशानं शक्ररूपधरं शिवम् ॥ प्रणम्य शिरसा प्राह महामुनिवरः स्वयम् ॥ १२ ॥ उपमन्युरुवाच ॥ पावितश्चाश्रम स्सोऽयं मम देवेश्वर स्वयम् ॥ प्राप्तो यत्त्वं जगन्नाथ भगवन्देवसत्तम ॥ १३ ॥ ॥ वायुरुवाच ॥ एवमुक्त्वा स्थितं प्रेक्ष्य कृतांजलिपुटं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





द्विजम् ॥ प्राह गंभीरया वाच शक्ररूपधरो हरः ॥ १४ ॥ शक्र उवाच ॥ तुष्टोस्मि ते वरं ब्रूहि तपसानेन सुव्रत ॥ ददामि चेप्सितान्सर्वान्धौम्याग्रज महामुने ॥ १५ ॥ वायुरुवाच ॥ एवमुक्तस्तदा तेन शक्रेण मुनिपुंगवः ॥ वारयामि शिवे भक्तिमित्युवाच कृताञ्जलिः ॥१६॥ तन्निशम्य हरिः प्राह मां न जानासि लेखपम् ॥ त्रैलोक्याधिपतिं शक्रं सर्वदेवनमस्कृतम् ॥ १७ ॥ मद्भक्तो भव विप्रर्षे मामेवार्चय सर्वदा ॥ ददामि सर्वं भद्रं ते त्यज रुद्रं च निर्गुणम् ॥ १८ ॥ रुद्रेण निर्गुणेनापि किं ते कार्यं भविष्यति ॥ देवपङ्क्तिबहिर्भूतो यः पिशाचत्वमागतः ॥ १९ ॥ वायुरुवाच ॥ तच्छ्रुत्वा प्राह स मुनिर्जपन्पंचाक्षरं मनुम् ॥ मन्यमानो धर्मविघ्नं प्राह तं कर्तुमागतम् ॥ २० ॥ उपमन्युरुवाच ॥ त्वयैवं कथितं सर्वं भवनिंदारतेन वै ॥ प्रसंगादेव देवस्य निर्गुणत्वं महात्मनः ॥ २१ ॥ त्वं न जानासि वै रुद्रं सर्वदेवेश्वरेश्वरम् ॥ ब्रह्मविष्णुमहेशानां जनकं प्रकृतेः परम् ॥२२॥ सदसद्व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः ॥ नित्यमेकमनेकं च वरं तस्माद्वृणोम्यहम् ॥ २३ ॥ हेतुवादविनिर्मुक्तं सांख्ययोगार्थदम्परम् ॥ उपासते यं तत्त्वज्ञा वरं तस्माद्वृणोम्यहम् ॥२४॥ नास्ति शंभोः परं तत्त्वं सर्वकारणकारणात् ॥ ब्रह्मविष्णवादिदेवानां स्रष्टुर्गुणपराद्विभोः ॥२५॥ बहुनात्र किमुक्तेन मयाद्यानुमितं महत् ॥ भवांतरे कृतं पापं श्रुता निन्दा भवस्य चेत् ॥ २६ ॥ श्रुत्वा निंदां भवस्याथ तत्क्षणादेव सन्त्यजेत् ॥ स्वदेहं तन्निहत्याशु शिवलोकं स गच्छति ॥ २७ ॥ आस्तां तावन्ममेच्छेयं क्षीरं प्रति सुराधम ॥ निहत्य त्वां शिवास्त्रेण त्यजाम्येतं कलेवरम् ॥ २८ ॥ वायुरुवाच ॥ एवमुक्त्वोपमन्युस्तं मर्तुं व्यवसितस्स्वयम् ॥ क्षीरे वाञ्छामपि त्यक्त्वा निहन्तुं शक्रमुद्यतः ॥ २९ ॥ भस्मादाय तदा घोरमघोरास्त्राभिमंत्रितम् ॥ विसृज्य शक्रमुद्दिश्य ननाद स मुनिस्तदा ॥ ३० ॥ स्मृत्वा शंभुपदद्वंद्वं स्वदेहं दग्धुमुद्यतः ॥ आग्नेयीं धारणां बिभ्रदुपमन्युरवस्थितः ॥ ३१ ॥ एवं व्यवसिते विप्रे भगवान्भगनेत्रहा ॥ वारयामास सौम्येन धारणां तस्य योगिनः ॥३२॥ तद्विसृष्टमघोरास्त्रं नंदीश्वरनियोगतः ॥ जगृहे मध्यतः क्षिप्तं नन्दी शंकरवल्लभः ॥३३॥

१ इन्द्रः ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्वं रूपमेव भगवानास्थाय परमेश्वरः ॥ दर्शयामास विप्राय बालेन्दुकृतशेखरम् ॥ ३४ ॥ क्षीरार्णवसहस्त्रं च पीयूषार्णवमेव वा ॥ दध्यादेरर्णवांश्चैव घृतोदार्णवमेव च ॥३५॥ फलार्णवं च बालस्य भक्ष्य भोज्यार्णवं तथा ॥ अपूपानां गिरिं चैव दर्शयामास स प्रभुः ॥ ३६ ॥ एवं स ददृशे देवो देव्या सार्द्धं वृषोपरि ॥ गणेश्वरैस्त्रिशूलाद्यैर्दिव्यास्त्रैरपि संवृतः ॥३७॥ दिवि दुंदुभयो नेदुः पुष्पवृष्टिः पपात च ॥ विष्णुब्रह्मेन्द्रप्रमुखैर्देवैश्छन्ना दिशो दश ॥३८॥ अथोपमन्युरानन्दसमुद्रोर्मिभिरावृतः ॥ पपात दण्डवद्भूमौ भक्तिनम्रेण चेतसा ॥३९॥ एतस्मिन्समये तत्र सस्मितो भगवान्भवः ॥ एह्येहीति तमाहूय मूर्ध्न्याघ्राय ददौ वरान् ॥४०॥ शिव उवाच ॥ भक्ष्यभोज्यान्यथाकामं बान्धवैर्भुङ्क्ष्व सर्वदा ॥ सुखी भव सदा दुःखान्निर्मुक्तो भक्तिमान्मम ॥४१॥ उपमन्यो महाभाग तवाम्बैषा हि पार्वती ॥ मया पुत्रीकृतो ह्यद्य दत्तः क्षीरोदकार्णवः ॥४२॥ मधुनश्चार्णवश्चैव दध्यन्नार्णव एव च ॥ आज्यौदनार्णवश्चैव फलाद्यर्णव एव च ॥४३॥ अपूपगिरयश्चैव भक्ष्यभोज्यार्णवस्तथा ॥ एते दत्ता मया ते हि त्वं गृह्णीष्व महामुने ॥४४॥ पिता तव महादेवो माता वै जगदम्बिका ॥ अमरत्वं मया दत्तं गाणपत्यं च शाश्वतम् ॥४५॥ वरान्वरय सुप्रीत्या मनोऽभिलषितान्परान् ॥ प्रसन्नोऽहं प्रदास्यामि नात्र कार्या विचारणा ॥४६॥ वायुरुवाच ॥ एवमुक्त्वो महादेवः कराभ्यामुपगृह्यतम् ॥ मूर्ध्न्याघ्राय सुतस्तेऽयमिति देव्यै न्यवेदयत् ॥४७॥ देवी च गुहवत्प्रीत्या मूर्ध्नि तस्य कराम्बुजम् ॥ विन्यस्य प्रददौ तस्मैकुमारपदमव्ययम् ॥४८॥ क्षीराब्धिरपि साकारः क्षीरं स्वादु करे दधत् ॥ उपस्थाय ददौ पिण्डीभूतं क्षीरमनश्वरम् ॥ ४९ ॥ योगैश्वर्यं सदा तुष्टिं ब्रह्मविद्यामनश्वराम् ॥ समृद्धिं परमान्तस्मै ददौ संतुष्टमानसः ॥५०॥ अथ शंभुः प्रसन्नात्मा दृष्ट्वा तस्य तपोमहः ॥ पुनर्ददौ वरं दिव्यं मुनये ह्युपमन्यवे ॥५१॥ व्रतं पाशुपतं ज्ञानं व्रतयोगं च तत्त्वतः ॥ ददौ तस्मै प्रवक्तृत्वपाटवं सुचिरं परम् ॥५२॥ सोऽपि लब्ध्वा वरान्दिव्यान्कुमारत्वं च सर्वदा ॥ तस्माच्छिवाच्च तस्याश्च शिवाया मुदितोऽभवत् ॥ ५३ ॥ ततः प्रसन्नचेतस्कः सुप्रणम्य कृतांजलिः ॥ ययाचे स वरं विप्रो देवदेवान्महेश्वरात् ॥ ५४ ॥ उपमन्युरुवाच ॥ प्रसीद देवदेवेश प्रसीद परमेश्वर ॥ स्वभक्तिन्देहि परमान्दिव्यामव्यभिचारि



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



णीम् ॥ ५५ ॥ श्रद्धान्देहि महादेव स्वसम्बन्धिषु मे सदा ॥ स्वदास्यं परमं स्नेहं सान्निध्यं चैव सर्वदा ॥ ५६ ॥ एवमुक्त्वा प्रसन्नात्माहर्षगद्गदया गिरा ॥ सतुष्टाव महादेवमुपमन्युर्द्विजोत्तमः ॥ ५७ ॥ ॥ उपमन्युरुवाच ॥ देवदेव महादेव शरणागतवत्सल ॥ प्रसीद करुणासिंधो साम्ब शंकर सर्वदा ॥ ५८ ॥ वायुरुवाच ॥ एवमुक्तो महादेवः सर्वेषां च वरप्रदः ॥ ॥ प्रत्युवाच प्रसन्नात्मोपमन्युं मुनिसत्तमम् ॥ ५९ ॥ ॥ शिव उवाच ॥ वत्सोपमन्यो तुष्टोऽस्मि सर्वं दत्तं मया हि ते ॥ दृढभक्तोऽसि विप्रर्षे मया जिज्ञासितो ह्यसि ॥ ६० ॥ अजरश्चामरश्चैव भव त्वन्दुःखवर्जितः ॥ यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः ॥ ६१ ॥ अक्षया बान्धवाश्चैव कुलं गोत्रं च ते सदा ॥ भविष्यति द्विजश्रेष्ठ मयि भक्तिश्च शाश्वती ॥ ६२ ॥ सान्निध्यं चाश्रमे नित्यं करिष्यामि द्विजोत्तम ॥ उपकंठं मम त्वं वै सानन्दं विहरिष्यसि ॥ ६३ ॥ एवमुक्त्वा स भगवान्सूर्यकोटिसमप्रभः ॥ ईशानस्स वरान्दत्त्वा तत्रैवान्तर्दधे हरः ॥ ६४ ॥ उपमन्युः प्रसन्नात्मा प्राप्य तस्माद्वराद्वरान् ॥ जगाम जननीस्थानं सुखं प्रापाधिकं च सः ॥ ६५ ॥ इति श्रीशिवमहापुराणे वैयासिक्यां चतुर्विंशतिसाहस्र्यां संहितायां तदन्तर्गतायां सप्तम्यां वायवीयसंहितायां पूर्वखण्डे उपमन्युचरितवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ समाप्तोऽयं सप्तम्या वायवीयसंहितायाः पूर्वखण्डः ॥ श्रीः ॥

३६०



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

श्रीगणेशाय नमः ॥ श्रीगौरीशंकराभ्यां नमः ॥ अथ सप्तम्यां वायवीयसंहितायामुत्तरखण्डः प्रारभ्यते॥ॐनमस्समस्तसंसारचक्रभ्रमणहेतवे ॥ गौरीकुचतटद्वन्द्वकुंकुमांकीतवक्षसे ॥१॥ सूत उवाच ॥ उक्त्वा भगवतो लब्धप्रसादादुपमन्युना ॥ नियमादुत्थितो वायुर्मध्ये प्राप्ते दिवाकरे ॥ २ ॥ ऋषयश्चापि ते सर्वे नैमिषारण्यवासिनः ॥ अथायमर्थः प्रष्टव्य इति कृत्वा विनिश्चयम् ॥ ३ ॥ कृत्वा यथा स्वकं कृत्यं प्रत्यहं ते यथा पुरा ॥ भगवंतमुपायांतं समीक्ष्य समुपाविशन् ॥४॥ अथासौ नियमस्यांते भगवानम्बरोद्भवः॥ मध्ये मुनिसभायास्तु भेजे क्लृप्तं वरासनम् ॥ ५ ॥ सुखासनोपविष्टश्च वायुर्लोकनमस्कृतः ॥ श्रीमद्विभूतिमीशस्य हृदि कृत्वेदमब्रवीत् ॥६॥ तं प्रपद्ये महादेवं सर्वज्ञमपराजितम् ॥ विभूतिस्सकलं यस्य चराचरमिदं जगत् ॥७॥ इत्याकर्ण्य शुभां वाणीमृषयः क्षीणकल्मषाः ॥ विभूतिविस्तरं श्रोतुमूचुस्ते परमं वचः॥८॥ऋषय ऊचुः ॥ उक्तं भगवता वृत्तमुपमन्योर्महात्मनः ॥ क्षीरार्थेनापि तपसा यत्प्राप्तं परमेश्वरात् ॥९॥ दृष्टोऽसौ वासुदेवेन कृष्णेनाक्लिष्टकर्मणा ॥ धौम्याग्रजस्ततस्तेन कृत्वा पाशुपतं व्रतम् ॥१०॥ प्राप्तं च परमं ज्ञानमिति प्रागेव शुश्रुम ॥ कथं स लब्धवान् कृष्णो ज्ञानं पाशुपतं परम् ॥ ११ ॥ वायुरुवाच ॥ स्वेच्छया ह्यवतीर्णोपि वासुदेवस्सनातनः ॥ निंदयन्निव मानुष्यं देहशुद्धिं चकार सः ॥१२॥ पुत्रार्थं हि तपस्तप्तुं गतस्तस्य महामुनेः ॥ आश्रमं मुनिभिर्दृष्टं दृष्टवांस्तत्र वै मुनिम्॥१३॥भस्मावदातसर्वांगं त्रिपुंड्रांकितमस्तकम् ॥ रुद्राक्षमालाभरणं जटामंडलमंडितम् ॥ १४ ॥ तच्छिष्यभूतैर्मुनिभिश्शास्त्रैर्वेदमिवावृतम् ॥ शिवध्यानरतं शांतमुपमन्युं महाद्युतिम् ॥१५॥ नमश्चकार तं दृष्ट्वा हृष्टसर्वतनूरुहः ॥ बहुमानेन कृष्णोऽसौ त्रिः कृत्वा तु प्रदक्षिणाम् ॥ स्तुतिं चकार सुप्रीत्या नतस्कंधः कृताञ्जलिः ॥१६॥ तस्यावलोकनादेव मुनेः कृष्णस्य धीमतः ॥ नष्टमासीन्मलं सर्वं मायाजं कार्ममेव च ॥१७॥ ततःक्षीणमलं कृष्णमुपमन्युर्यथाविधिः ॥ भस्मनोद्धूल्य तं मन्त्रैरग्निरित्यादिभिःक्रमात् ॥१८॥ अथ पाशुपतं साक्षाद्व्रतं द्वादशमासिकम् ॥ कारयित्वा मुनिस्तस्मै प्रददौ ज्ञानमुत्तमम् ॥१९॥ तदाप्रभृति तं कृष्णं मुनयश्शंसितव्रताः ॥ दिव्याः पाशुपतासर्वे परिवृत्योपतस्थिरे ॥ २० ॥ ततो गुरुनियोगाद्वै कृष्णः परमशक्ति

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





मान् ॥ तपश्चकार पुत्रार्थं सांबमुद्दिश्य शंकरम् ॥ २१ ॥ तपसा तेन वर्षांते दृष्टोऽसौ परमेश्वरः ॥ श्रिया परमया युक्तस्सांबश्च सगणशिवः ॥२२॥ वरार्थमाविर्भूतस्य हरस्य सुभगाकृतेः ॥ स्तुतिं चकार नत्वासौ कृष्णः सम्यक्कृतांजलिः ॥ २३ ॥ सांबं समगणव्यग्रो लब्धवान्पुत्रमात्मनः ॥ तपसा तुष्टचित्तेन दत्तं विष्णोश्शिवेन वै ॥२४॥ यस्मात्सांबो महादेवः प्रददौ पुत्रमात्मनः ॥ तस्माज्जांबवतीसूनुं सांबं चक्रे स नामतः ॥ २५ ॥ तदेतत्कथितं सर्वं कृष्णस्यामितकर्मणः ॥ महर्षेर्ज्ञानलाभश्च पुत्रलाभश्च शंकरात् ॥ २६ ॥ य इदं कीर्तयेन्नित्यं शृणुयाच्छ्रावयेत्तथा ॥ स विष्णोर्ज्ञानमासाद्य तेनैव सह मोदते ॥ २७ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे कृष्णपुत्रप्राप्तिवर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥ ॥ ऋषय ऊचुः ॥ किं तत्पाशुपतं ज्ञानं कथं पशुपतिश्शिवः ॥ कथं धौम्याग्रजः पृष्टः कृष्णेनाक्लिष्टकर्मणा ॥ १ ॥ एतत्सर्वं ससाचक्ष्व वायो शंकरविग्रह ॥ तत्समो न हि वक्तास्ति त्रैलोक्येष्वपरः प्रभुः ॥२॥ सूत उवाच॥इत्याकर्ण्य वचस्तेषां महर्षीणां प्रभंजनः ॥ संस्मृत्य शिवमीशानं प्रवक्तुमुपचक्रमे ॥३॥ वायुरुवाच॥पुरा साक्षान्महेशेन श्रीकंठाख्येन मन्दरे॥देव्यै देवेन कथितं ज्ञानं पाशुपतं परम्॥४॥तदेव पृष्टं कृष्णेन विष्णुना विश्वयोनिना ॥ पशुत्वं च सुरादीनां पतित्वं च शिवस्य च ॥५॥ यथोपदिष्टं कृष्णाय मुनिना ह्युपमन्युना ॥ तथा समासतो वक्ष्ये तच्छृणुध्वमतंद्रिताः॥६॥पुरोपमन्युमासीनं विष्णुःकृष्णवपुर्धरः ॥ प्रणिपत्य यथान्यायमिदं वचनमब्रवीत्॥७॥श्रीकृष्ण उवाच ॥ भगवञ्छ्रोतुमिच्छामि देव्यै देवेन भाषितम् ॥ दिव्यं पाशुपतं ज्ञानं विभूतिं वास्य कृत्स्नशः ॥८॥ कथं पशुपतिर्देवः पशवः के प्रकीर्तिताः ॥ कैः पाशैस्ते निबध्यंते विमुच्यंते च ते कथम् ॥९॥ इति संचोदितः श्रीमानुपमन्युर्महात्मना ॥ प्रणम्य देवं देवीं च प्राह पृष्टो यथा तथा ॥१०॥ उपमन्युरुवाच ॥ ब्रह्माद्याः स्थावरांताश्च देवदेवस्य शूलिनः ॥ पशवः परिकीर्त्यंते संसारवशवर्तिनः ॥११॥ तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः ॥ मलमायादिभिः पाशैः स बध्नाति पशून्पतिः ॥ १२ ॥ स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ॥ चतुर्विंशतितत्त्वानि मायाकर्मगुणा अमी ॥१३॥ विषया इति कथ्यन्ते पाशा जीवनिबन्धनाः ॥ ब्रह्मादिस्त



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

म्बपर्यंतान् पशून्बद्ध्वा महेश्वरः ॥१४॥ पाशैरेतैः पतिर्देवः कार्यं कारयति स्वकम् ॥ तस्याज्ञया महेशस्य प्रकृतिः पुरुषोचिताम् ॥१५॥ बुद्धिं प्रसूते सा बुद्धिरहंकारमहंकृतिः ॥ इन्द्रियाणि दशैकं च तन्मात्रापञ्चकं तथा ॥ १६ ॥ शासनाद्देवदेवस्य शिवस्य शिवदायिनः ॥ तन्मात्राण्यपि तस्यैव शासनेन महीयसा ॥१७॥ महाभूतान्यशेषाणि भावयंत्यनुपूर्वशः ॥ ब्रह्मादीनां तृणान्तानां देहिनां देहसंगतिम् ॥ १८ ॥ महाभूतान्यशेषाणि जनयंति शिवाज्ञया ॥ अध्यवस्यति वै बुद्धिरहंकारोभिमन्यते ॥१९॥ चित्तं चेतयते चापि मनः संकल्पयत्यपि ॥ श्रोत्रादीनि च गृह्णन्ति शब्दादीन्विषयान् पृथक् ॥ २० ॥ स्वानेव नान्यान्देवस्य दिव्येनाज्ञाबलेन वै ॥ वागादीन्यपि यान्यासंस्तानि कर्मेन्द्रियाणि च ॥२१॥ यथा स्वं कर्म कुर्वन्ति नान्यत्किंचिच्छिवाज्ञया ॥ शब्दादयोपि गृह्यंते क्रियन्ते वचनादयः ॥२२॥अविलंघ्या हि सर्वेषामाज्ञा शंभोर्गरीयसी॥अवकाशमशेषाणां भूतानां संप्रयच्छति॥२३॥ आकाशः परमेशस्य शासनादेव सर्वगः ॥ प्राणाद्यैश्च तथा नामभेदैरंतर्बहिर्जगत् ॥ २४ ॥ बिभर्ति सर्वं शर्वस्य शासनेन प्रभञ्जनः॥ हव्यं वहति देवानां कव्यं कव्याशिनामपि॥२५॥पाकाद्यं च करोत्यग्निः परमेश्वरशासनात्॥संजीवनाद्यं सर्वस्य कुर्वंत्यापस्तदाज्ञया ॥२६॥विश्वम्भरा जगन्नित्यं धत्ते विश्वेश्वराज्ञया॥देवान्पात्यसुरान् हंति त्रिलोकमभिरक्षति॥२७॥ आज्ञया तस्य देवेन्द्रः सर्वैर्देवैरलंघ्यया ॥ आधिपत्यमपां नित्यं कुरुते वरुणस्सदा॥२८॥पाशैर्बध्नाति च यथा दंड्यांस्तस्यैव शासनात् ॥ ददाति नित्यं यक्षेन्द्रो द्रविणं द्रविणेश्वरः ॥ २९ ॥ पुण्यानूरूपं भूतेभ्यः पुरुषस्यानुशासनात् ॥ करोति संपदः शश्वज्ज्ञानं चापि सुमेधसाम् ॥ ३० ॥ निग्रहं चाप्यसाधूनामीशानश्शिवशासनात् ॥ धत्ते तु धरणीं मूर्ध्ना शेषः शिवनियोगतः॥३१॥यामाहुस्तामसीं रौद्रीं मूर्तिमंतकरीं हरेः ॥ सृजत्यशेषमीशस्य शासनाच्चतुराननः ॥३२॥ अन्याभिर्मूर्तिभिः स्वाभिः पाति चांते निहन्ति च ॥ विष्णुः पालयते विश्वं कालकालस्य शासनात् ॥ ३३ ॥ सृजते ग्रसते चापि स्वकाभिस्तनुभिस्त्रिभिः ॥ हरत्यंते जगत्सर्वं हरस्तस्यैव शासनात् ॥ ३४ ॥ सृजत्यपि च विश्वात्मा त्रिधा भिन्नस्तु रक्षति ॥ कालः करोति सकलं कालस्संहरति प्रजाः ॥ ३५ ॥ कालः पालयते विश्वं कालका

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



लस्य शासनात् ॥ त्रिभिरंशैर्जगद्भिश्च तेजोभिर्वृष्टिमादिशन् ॥३६॥ दिवि वर्षत्यसौ भानुर्देवदेवस्य शासनात्॥पुष्णात्योषधिजा
तानि भूतान्याह्लादयत्यपि ॥ ३७ ॥ देवैश्च पीयते चंद्रश्चंद्रभूषणशासनात् ॥ आदित्या वसवो रुद्रा अश्विनौ मरुतस्तथा॥३८॥
खेचरा ऋषयस्सिद्धा भोगिनो मनुजा मृगाः ॥ पशवः पक्षिणश्चैव कीटाद्याः स्थावराणि च॥३९॥नद्यस्समुद्रा गिरयः काननानि
सरांसि च ॥ वेदाः सांगाश्च शास्त्राणि मंत्रस्तोममखादयः ॥ ४० ॥ कालाग्न्यादिशिवांतानि भुवनानि सहाधिपैः॥ब्रह्मांडान्यप्य
संख्यानि तेषामावरणानि च॥४१॥वर्तमानान्यतीतानि भविष्यन्त्यपि कृत्स्नशः॥दिशश्च विदिशश्चैव कालभेदाः कलादयः॥४२॥
यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा॥तत्सर्वं शंकरस्याज्ञा बलेन समधिष्ठितम्॥४३॥आज्ञाबलात्तस्य धरा स्थितेह धराधरा
वारिधराः समुद्राः ॥ ज्योतिर्गणाः शक्रमुखाश्च देवाः स्थिरं चिरं वा चिदचिद्यदस्ति ॥४४॥ उपमन्युरुवाच॥अत्याश्चर्यमिदं कृष्ण
शंभोरमितकर्मणः ॥ आज्ञाकृतं शृणुष्वैतच्छ्रुतं श्रुतिमुखे मया ॥ ४५ ॥ पुरा किल सुराः सेंद्रा विवदंतः परस्परम्॥असुरान्समरे
जित्वा जेताहमहमित्युत ॥ ४६ ॥ तदा महेश्वरस्तेषां मध्यतो वरवेषधृक् ॥ स्वलक्षणैर्विहीनांगः स्वयं यक्ष इवाभवत्॥४७॥ स
तानाह सुरानेकं तृणमादाय भूतले ॥ य एतद्विकृतं कर्तुं क्षमते स तु दैत्यजित् ॥ ४८ ॥ यक्षस्य वचनं श्रुत्वा वज्रपाणिः
शचीपतिः ॥ किंचित्क्रुद्धो विहस्यैनं तृणमादातुमुद्यतः ॥४९॥ न तत्तृणमुपादातुं मनसापि च शक्यते ॥ यथा तथापि तच्छेत्तुं
वज्रं वज्रधरोऽसृजत् ॥ ५० ॥ तद्वज्रं निजवज्रेण संसृष्टमिव सर्वतः ॥ तृणेनाभिहतं तेन तिर्यगग्रं पपात ह ॥ ५१ ॥
ततश्चान्ये सुसंरब्धा लोकपाला महाबलाः ॥ ससृजुस्तृणमुद्दिश्य स्वायुधानि सहस्रशः ॥ ५२ ॥ प्रजज्वाल महावह्निः
प्रचंडः पवनो ववौ ॥ प्रवृद्धोऽपांपतिर्यद्वत्प्रलये समुपस्थिते ॥५३॥ एवं देवैस्समारब्धं तृणमुद्दिश्ययत्नतः ॥ व्यर्थमासीदहो कृष्ण
यक्षस्यात्मबलेन वै ॥ ५४ ॥ तदाह यक्षं देवेंद्रः को भवानित्यमर्षितः ॥ ततस्स पश्यतामेव तेषामंतरधादथ ॥ ५५ ॥
तदंतरे हैमवती देवी दिव्यविभूषणा ॥ आविरासीन्नभोरंगे शोभमाना शुचिस्मिता ॥ ५६ ॥ तां दृष्ट्वा विस्मयाविष्टा देवाः





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

शक्रपुरोगमाः ॥ प्रणम्य यक्षं पप्रच्छुः कोऽसौ यक्षो विलक्षणः ॥ ५७ ॥ साऽब्रवीत्सस्मितं देवी स युष्माकमगोचरः ॥ तेनेदं भ्रम्यते चक्रं संसाराख्यं चराचरम् ॥५८॥ तेनादौ क्रियते विश्वं तेन संह्रियते पुनः ॥ न तन्नियन्ता कश्चित्स्यात्तेन सर्वं नियम्यते ॥ ५९ ॥ इत्युक्त्वा सा महादेवी तत्रैवांतरधत्त वै ॥ देवाश्च विस्मिताः सर्वे तां प्रणम्य दिवं ययुः ॥६०॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखंडे द्वितीयोऽध्यायः ॥२॥ उपमन्युरुवाच ॥ शृणु कृष्ण महेशस्य शिवस्य परमात्मनः॥मूर्त्यात्मभिस्ततं कृत्स्नं जगदेतच्चराचरम् ॥१॥ स शिवस्सर्वमेवेदं स्वकीयाभिश्च मूर्तिभिः ॥ अधितिष्ठत्यमेयात्मा ह्येतत्सर्वमनुस्मृतम् ॥ २ ॥ ब्रह्मा विष्णुस्तथा रुद्रो महेशानस्सदाशिवः॥मूर्त्तयस्तस्य विज्ञेया याभिर्विश्वमिदं ततम् ॥ ३ ॥ अथान्याश्चापि तनवः पंच ब्रह्मसमाह्वयाः ॥ तनूभिस्ताभिराव्याप्तमिह किंचिन्न विद्यते॥४॥ईशानः पुरुषोऽघोरो वामः सद्यस्तथैव च॥ब्रह्माण्येतानि देवस्य मूर्त्तयः पंच विश्रुताः ॥ ५ ॥ ईशानाख्या तु या तस्य मूर्त्तिराद्या गरीयसी ॥ भोक्तारं प्रकृतेः साक्षात्क्षेत्रज्ञमधितिष्ठति ॥ ६ ॥ स्थाणोस्तत्पुरुषाख्या या मूर्त्तिर्मूर्त्तिमतः प्रभोः ॥ गुणाश्रयात्मकं भोग्यमव्यक्तमधितिष्ठति ॥७॥ धर्माद्यष्टांगसंयुक्तं बुद्धितत्त्वं पिनाकिनः ॥ अधितिष्ठत्यघोराख्या मूर्त्तिरत्यंतपूजिता ॥ ८ ॥ वामदेवाह्वयां मूर्त्तिं महादेवस्य वेधसः ॥ अहंकृतेरधिष्ठात्रीमाहुरागमवेदिनः ॥ ९ ॥ सद्योजाताह्वयां मूर्त्तिं शम्भोरमितवर्चसः ॥ मानसः समधिष्ठात्रीं मतिमंतः प्रचक्षते ॥ १० ॥ श्रोत्रस्य वाचः शब्दस्य विभोर्व्योम्नस्तथैवच ॥ ईश्वरीमीश्वरस्येमामीशाख्यां हि विदुर्बुधाः ॥ ११ ॥ त्वक्पाणिस्पर्शवायूनामीश्वरीं मूर्तिमैश्वरीम् ॥ पुरुषाख्यं विदुस्सर्वे पुराणार्थ विशारदाः ॥१२॥ चक्षुषश्चरणस्यापि रूपस्याग्नेस्तथैव च ॥ अघोराख्यामधिष्ठात्रीं मूर्तिमाहुर्मनीषिणः॥१३॥रसनायाश्च पायोश्च रसस्यापां तथैव च ॥ ईश्वरीं वामदेवाख्यां मूर्त्तिं तन्निरतां विदुः ॥१४॥ घ्राणस्य चैवोपस्थस्य गंधस्य च भुवस्तथा॥सद्योजाताह्वयां मूर्तिमीश्वरीं संप्रचक्षते॥१५॥मूर्तयः पंच देवस्य वंदनीयाः प्रयत्नतः ॥ श्रेयोर्थिभिर्नरैर्नित्यं श्रेयसामेकहेतवः ॥१६॥ तस्य देवादिदेवस्य मूर्त्यष्टकमयं जगत् ॥ तस्मिन्व्याप्य स्थितं विश्वं सूत्रे मणिगणा इव ॥१७॥ शर्वो भवस्तथा रुद्र उग्रो भीमः पशोः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





पतिः ईशानश्च महादेवो मूर्त्तयश्चाष्ट विश्रुताः ॥ १८ ॥ भूम्यंभोग्निमरुद्व्योमक्षेत्रज्ञार्कनिशाकराः ॥ अधिष्ठिता महेशस्य शर्वाद्यैरष्ट मूर्त्तिभिः ॥१९॥ चराचरात्मकं विश्वं धत्ते विश्वंभरात्मिका ॥ शार्वी शिवाह्वया मूर्तिरिति शास्त्रस्य निश्चयः ॥२०॥ संजीवनं समस्तस्य जगतस्सलिलात्मिका ॥ भावीति गीयते मूर्तिभवस्य परमात्मनः ॥२१॥ बहिरंतर्गता विश्वं व्याप्य तेजोमयी शुभा ॥ रौद्री रुद्राग्व्यया मूर्तिरास्थिता घोररूपिणी ॥ २२ ॥ स्पंदयत्यनिलात्मेदं बिभर्ति स्पंदते स्वयम् ॥ औग्रीति कथ्यते सद्भिर्मूर्तिरुग्रस्य वेधसः ॥२३॥ सर्वावकाशदा सर्वव्यापिका गगनात्मिका ॥ मूर्तिर्भीमस्य भीमाख्या भूतवृंदस्य भेदिका ॥ २४ ॥ सर्वात्मनामधिष्ठात्री सर्वक्षेत्रनिवासिनी ॥ मूर्तिः पशुपतेर्ज्ञेया पशुपाशनिकृंतनी ॥२५॥ दीपयंती जगत्सर्वं दिवाकरसमाह्वया ॥ ईशानाख्य महेशस्य मूर्तिर्दिवि विसर्पति॥२६॥आप्याययति यो विश्वममृतांशुर्निशाकरः॥महादेवस्य सा मूर्तिर्महादेवसमाह्वया २७॥ आत्मा तस्याष्टमी मूर्तिः शिवस्य परमात्मनः॥व्यापिकेतरमूर्तीनां विश्व तस्माच्छिवात्मकम्॥२८॥ वृक्षस्य मूलसेकेन शाखाःपुष्यंतिवै यथा॥ शिवस्य पूजया तद्वत्पुष्यत्यस्य वपुर्जगत्॥२९॥सवाभयप्रदानं च सर्वानुग्रहणं तथा॥सर्वोपकारकरणं शिवस्याराधनं विदुः ॥३०॥ यथेह पुत्रपौत्रादेःप्रीत्या प्रीतो भवेत्पिता ॥ तथा सर्वस्य संप्रीत्या प्रीतो भवति शंकरः ॥३१॥ देहिनो यस्य कस्यापि क्रियते यदि निग्रहः ॥ अनिष्टमष्टमूर्तेस्तत्कृतमेव न संशयः ॥३२॥ अष्टमूर्त्यात्मना विश्वमधिष्ठाय स्थितं शिवम् ॥ भजस्व सर्वभावेन रुद्रः परमकारणम् ॥ ३३ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायांमुत्तरखण्डे तृतीयोऽध्यायः ॥ ३ ॥ ॥ कृष्ण उवाच ॥ भगवन्परमेशस्य शर्वस्यामिततेजसः॥मूर्तिभिर्विश्वमेवेदं यथा व्याप्तं तथा श्रुतम्॥१॥अथैतज्ज्ञातुमिच्छामि याथात्म्यं परमेशयोः स्त्रीपुंभावात्मकं चेदं ताभ्यांकथमधिष्ठितम्॥२॥उपमन्युरुवाच॥श्रीमद्विभूतिं शिवयोर्याथात्म्यं च समासतः॥वक्ष्ये तद्विस्तराद्वक्तुं भवेनापि न शक्यते ॥३॥ शक्तिः साक्षान्महादेवी महादेवश्च शक्तिमान् ॥ तयोर्विभूतिलेशो वै सर्वमेतच्चराचरम् ॥४॥ वस्तु किंचि

१ अलुक्समास आर्षः ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

दचिद्रूपं किंचिद्वस्तु चिदात्मकम् ॥ द्वयं शुद्धमशुद्धं च परं चापरमेव च॥५॥यत्संसरति चिच्चक्रमचिच्चक्रसमन्वितम् ॥ तदेवाशुद्धम
परमितरं तु परं शुभम् ॥६॥ अपरं च परं चैव द्वयं चिदचिदात्मकम् ॥ शिवस्य च शिवायाश्च स्वाम्यं चैतत्स्वभावतः ॥७॥
शिवयोर्वै वशे विश्वं न विश्वस्य वशे शिवौ ॥ ईशितव्यमिदं यस्मात्तस्माद्विश्वेश्वरौ शिवौ ॥ ८ ॥ यथा शिवस्तथा देवी यथा
देवी तथा शिवः ॥ नानयोरंतरं विद्याच्चंद्रचन्द्रिकयोरिव ॥९॥ चंद्रो न खलु भात्येष यथा चंद्रिकया विना ॥ न भाति विद्यमा
नोऽपि तथा शक्त्या विना शिवः ॥ १० ॥ प्रभया हि विनायद्वद्भानुरेष न विद्यते ॥ प्रभा च भानुना तेन सुतरां तदुपाश्रया ॥११॥
एवं परस्परापेक्षा शक्तिशक्तिमतोः स्थिता ॥ न शिवेन विना शक्तिर्न शक्त्या च विना शिवः ॥ १२ ॥ शक्तौयया शिवो नित्यं
भुक्तौ मुक्तौ च देहिनाम् ॥ आद्या सैका परा शक्तिश्चिन्मयी शिवसंश्रया ॥ १३ ॥ यामाहुरखिलेशस्य तैस्तैरनुगुणैर्गुणैः ॥ समान
धर्मिणीमेव शिवस्य परमात्मनः ॥ ॥ १४ ॥ सैका परा च चिद्रूपा शक्तिः प्रसवधर्मिणी ॥ विभज्य बहुधा विश्वं विदधाति शिवे
च्छया ॥ १५ ॥ :सा मूलप्रकृतिर्माया त्रिगुणा च त्रिधा स्मृता ॥ शिवया च विपर्यस्तं यया ततमिदं जगत् ॥ १६ ॥
एकधा च द्विधा चैव तथा शतसहस्रधा ॥ शक्तयः खलु भिद्यंते बहुधा व्यवहारतः ॥ १७ ॥ शिवेच्छया परा
शक्तिः शिवतत्त्वैकतां गता ॥ ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव ॥ १८ ॥ ततः क्रियाख्यया शक्त्या शक्तौ
शक्तिमदुत्थया ॥ तस्यां विक्षोभ्यमाणायामादौ नादः समुद्भभौ ॥१९॥ नादाद्विनिःसृतो बिंदुर्बिंदोर्देवस्सदाशिवः ॥ तस्मान्महे
श्वरोजातः शुद्धविद्या महेश्वरात् ॥ २० ॥ सा वाचामीश्वरी शक्तिर्वागीशाख्या हि शूलिनः ॥ या सा वर्णस्वरूपेण मातृकेपि
विजृंभिते ॥ २१ ॥ अथानंतसमावेशान्माया कालमवासृजत् ॥ नियतिश्च कलां विद्यां कलातोरागपूरुषौ ॥२२॥ मायातः पुनरेवा
भूदव्यक्तं त्रिगुणात्मकम् ॥ त्रिगुणाच्च ततो व्यक्ताद्विभक्ताः स्युस्त्रयो गुणाः ॥ २३ ॥ सत्त्वं रजस्तमश्चेति यैर्व्याप्तमखिलं जगत्॥
गुणेभ्यः क्षोभ्यमाणेभ्यो गुणेशाख्यास्त्रिमूर्त्तयः ॥२४॥ अभवन्महदादीनि तत्त्वानि च यथाक्रमम् ॥ तेभ्यस्स्युरण्डपिण्डानि त्व

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





संख्यानि शिवाज्ञया॥अधिष्ठितान्यनन्ताद्यैर्विद्येशैश्चक्रवर्तिभिः॥२५॥शरीरांतरभेदेन शक्तेर्भेदाः प्रकीर्तिताः॥नानारूपास्तु विज्ञेयाः स्थूलसूक्ष्मविभेदतः ॥ २६ ॥ रुद्रस्य रौद्री सा शक्तिर्विष्णोर्वै वैष्णवी मता ॥ ब्रह्माणी ब्रह्मणः प्रोक्ता चेन्द्रस्यैंद्रीति कथ्यते ॥२७॥ किमत्र बहुनोक्तेन यद्विश्वमिति कीर्तितम् ॥ शक्त्यात्मनैव तद्व्याप्तं यथा देहोऽतरात्मना ॥२८॥ तस्माच्छक्तिमयं सर्वं जगत्स्थावरजंगमम् ॥ कला या परमा शक्तिः कथिता परमात्मनः ॥ २९ ॥ एवमेषा परा शक्तिरीश्वरेच्छानुयायिनी ॥ स्थिरं चरं च यद्विश्वं सृजतीति विनिश्चयः ॥ ३० ॥ ज्ञानक्रिया चिकीर्षाभिस्तिसृभिस्स्वात्मशक्तिभिः ॥ शक्तिमानीश्वरः शश्वद्विश्वं व्याप्याधितिष्ठति ॥३१॥ इदमित्थमिदं नेत्थं भवेदित्येवमात्मिका ॥ इच्छाशक्तिर्महेशस्य नित्या कार्य्यनियामिका ॥३२॥ ज्ञानशक्तिस्तु तत्कार्यं करणं कारणं तथा ॥ प्रयोजनं च तत्त्वेन बुद्धिरूपाध्यवस्यति ॥ ३३ ॥ यथेप्सितं क्रियाशक्तिर्यथाध्यवसितं जगत् ॥ कल्पयत्यखिलं कार्यं क्षणात्संकल्परूपिणी ॥ ३४ ॥ यथा शक्तित्रयोत्थानं शक्तिप्रसवधर्मिणी ॥ शक्त्या परमया नुन्ना प्रसूते सकलं जगत् ॥ ३५ ॥ एवं शक्ति समायोगाच्छक्तिमानुच्यते शिवः ॥ शक्तिशक्तिमदुत्थं तु शाक्तं शैवमिदं जगत् ॥ ३६ ॥ यथा न जायते पुत्रः पितरं मातरं विना ॥ तथा भवं भवानीं च विना नैतच्चराचरम् ॥ स्त्रीपुंसप्रभवं विश्वं स्त्रीपुंसात्मकमेव च ॥३७॥ स्त्रीपुंसयोर्विभूतिश्च स्त्रीपुंसाभ्यामधिष्ठितम् ॥ परमात्मा शिवः प्रोक्तश्शिवा सा च प्रकीर्तिता ॥ ३८ ॥ शिवस्सदाशिवः प्रोक्तः शिवा सा च मनोन्मनी ॥ शिवो महेश्वरो ज्ञेयः शिवा मायेति कथ्यते ॥ ३९ ॥ पुरुषः परमेशानः प्रकृतिः परमेश्वरी ॥ रुद्रो महेश्वरस्साक्षाद्रुद्राणी रुद्रवल्लभा ॥ ४० ॥ विष्णुर्विश्वेश्वरो देवो लक्ष्मीर्विश्वेश्वरप्रिया ॥ ब्रह्मा शिवो यदा स्रष्टा ब्रह्माणी ब्रह्मणः प्रिया ॥४१॥ भास्करो भगवाञ्छंभुः प्रभा भगवती शिवा ॥ महेंद्रो मन्मथारातिः शची शैलेन्द्रकन्यका ॥४२॥ जातवेदा महादेवः स्वाहा शर्वार्द्धदेहिनी ॥ यमस्त्रियंबको देवस्तत्प्रिया गिरिकन्यका ॥४३॥ निर्ऋतिर्भगवानीशो नैर्ऋती नगनंदिनी ॥ वरुणो भगवान्रुद्रो वारुणी भूधरात्मजा ॥ ४४ ॥ बालेंदुशेखरो वायुः शिवा शिवमनोहरा ॥ यक्षो यज्ञशिरोहर्ता ऋद्धिर्हिमगिरीन्द्रजा ॥ ४५ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

चंद्रार्धशेखरश्चंद्रो रोहिणी रुद्रवल्लभा ॥ ईशानः परमेशानस्तदार्या परमेश्वरी ॥ ४६ ॥ अनंतवलयोऽनंतो ह्यनंतानंतवल्लभा ॥ कालाग्निरुद्रः कालारिः काली कालांतकप्रिया ॥ ४७ ॥ पुरुषाख्यो मनुश्शंभुः शतरूपा शिवप्रिया ॥ दक्षस्साक्षान्महादेवः प्रसूतिः परमेश्वरी ॥ ४८ ॥ रुचिर्भवो भवानी च बुधैराकूतिरुच्यते ॥ भृगुर्भगाक्षिहा देवः ख्यातिस्त्रिनयनप्रिया ॥ ४९ ॥ मरीचिर्भगवान्रुद्रः संभूतिश्शर्ववल्लभा ॥ गंगाधरोंऽगिरा ज्ञेयः स्मृतिः साक्षादुमा स्मृता ॥ ५० ॥ पुलस्त्यः शशभृन्मौलिः प्रीतिः कांता पिनाकिनः॥ पुलहस्त्रिपुरध्वंसी तत्प्रिया तु शिवप्रिया ॥५१॥ क्रतुध्वंसी क्रतुः प्रोक्तः संनतिर्दयिता विभोः॥ त्रिनेत्रोऽत्रिरुमा साक्षादनसूया स्मृता बुधैः ॥ ५२ ॥ कश्यपः कालहा देवो देवमाता महेश्वरी ॥ वसिष्ठो मन्मथारातिर्देवी साक्षादरुंधती ॥ ५३ ॥ शंकरः पुरुषास्सर्वे स्त्रियस्सर्वा महेश्वरी ॥ सर्वे स्त्रीपुरुषास्तस्मात्तयोरेव विभूतयः ॥ ५४ ॥ विषयी भगवानीशो विषयः परमेश्वरी॥ श्राव्यं सर्वमुमारूपं श्रोता शूलवरायुधः॥५५॥प्रष्टव्यं वस्तुजातं तु धत्ते शंकरवल्लभा ॥ प्रष्टा स एव विश्वात्मा बालचन्द्रावतंसकः ॥ ५६ ॥ द्रष्टव्यं वस्तुरूपं तु बिभर्त्ति वक्तवल्लभा ॥ द्रष्टा विश्वेश्वरो देवः शशिखंडशिखामणिः ॥ ५७ ॥ रसजातं महादेवी देवो रसयिता शिवः ॥ प्रेयजातं च गिरिजा प्रेयांश्चैव गराशनः ॥५८॥ मंतव्यवस्तुतां धत्ते सदा देवी महेश्वरी ॥ मंता स एव विश्वात्मा महादेवो महेश्वरः॥५९॥बोद्धव्यवस्तुरूपं तु बिभर्त्ति भववल्लभा॥देवस्स एव भगवान्बोद्धा मुग्धेन्दुशेखरः ॥ ॥ ६० ॥ प्राणः पिनाकी सर्वेषां प्राणिनां भगवान्प्रभुः ॥ प्राणस्थितिस्तु सर्वेषामंबिका चांबुरूपिणी ॥६१॥ बिभर्ति क्षेत्रतां देवी त्रिपुरांतकवल्लभा ॥ क्षेत्रज्ञत्वं तदा धत्ते भगवानंतकांतकः ॥६२॥ अहः शूलायुधो देवः शूलपाणिप्रिया निशा ॥ आकाशः शंकरो देवः पृथिवी शंकरप्रिया ॥६३॥ समुद्रो भगवानीशो वेला शैलेंन्द्रकन्यका ॥ वृक्षो वृषध्वजो देवो लता विश्वेश्वरप्रिया ॥ ६४ ॥ पुल्लिंगमखिलं धत्ते भगवान्पुरशासनः ॥ स्त्रिलिंगं चाखिलं धत्ते देवी देवमनोरमा ॥ ६५ ॥ शब्दजालमशेषं तु धत्ते सर्वस्य वल्लभा ॥ अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः ॥ ६६ ॥ यस्य यस्य पदार्थस्य या या शक्तिरुदाहृता ॥ सा सा विश्वेश्वरी देवी

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





स स सर्वो महेश्वरः ॥ ६७ ॥ यत्परं यत्पवित्रं च यत्पुण्यं यच्च मंगलम् ॥ तत्तदाह महाभागास्तयोस्तेजोविजृंभितम् ॥ ६८ ॥ तथा दीपस्य दीप्तस्य शिखा दीपयते गृहम् ॥ तथा तेजस्तयोरेतद्व्याप्य दीपयते जगत् ॥ ६९ ॥ तृणादिशिवमूर्त्यंतं विश्वख्यातिशयक्रमः ॥ सन्निकर्षक्रमवशात्तयोरिति परा श्रुतिः ॥ ७० ॥ सर्वाकारात्मकावेतौ सर्वश्रेयोविधायिनौ ॥ पूजनीयौ नमस्कार्यौ चिंतनीयौ च सर्वदा ॥ ७१ ॥ यथाप्रज्ञमिदं कृष्ण याथात्म्यं परमेशयोः ॥ कथितं हि मया तेऽद्य न तु तावदियत्तया ॥ ७२ ॥ तत्कथं शक्यते वक्तुं याथात्म्यं परमेशयोः ॥ महतामपि सर्वेषां मनसोऽपि बहिर्गतम् ॥ ७३ ॥ अंतर्गतमनन्यानामीश्वरार्पितचेतसाम् ॥ अन्येषां बुद्ध्यचनारूढमारूढं च यथैव तत् ॥७४॥ येयमुक्ता विभूतिर्वै प्राकृती सा परा मता ॥ अप्राकृतां परामन्यां गुह्यां गुह्यविदो विदुः ॥७५॥ यतो वाचो निवर्त्तंते मनसा चेन्द्रियैस्सह ॥ अप्राकृती परा चैषा विभूतिः पारमेश्वरी ॥ ७६ ॥ सैवेह परमं धाम सैवेह परमा गतिः ॥ सैवेह परमा काष्ठा विभूतिः परमेष्ठिनः ॥ ७७ ॥ तां प्राप्तुं प्रयतंतेऽत्र जितश्वासा जितेंद्रियाः ॥ गर्भकारागृहद्वारं निश्छिद्रं घटितुं यथा ॥ ७८ ॥ संसाराशीविषालीढमृतसंजीवनौषधम् ॥ विभूतिं शिवयोर्विद्वान्न बिभेति कुतश्चन ॥ ७९ ॥ यः परामपरां चैव विभूतिं वेत्ति तत्त्वतः ॥ सोऽपरो भूतिमुल्लंघ्य परां भूतिं समश्नुते ॥८०॥ एतत्ते कथितं कृष्ण याथात्म्यं परमात्मनोः ॥ रहस्यमपि योग्योऽसि भर्गभक्तो भवानिति ॥८१॥ नाशिष्येभ्योऽप्यशैवेभ्यो नाभक्तेभ्यः कदाचन ॥ व्याहरेदीशयोर्भूतिमिति वेदानुशासनम् ॥ ८२ ॥ तस्मात्त्वमतिकल्याण परेभ्यः कथयेन्न हि ॥ त्वादृशेभ्योऽनुरूपेभ्यः कथयैतन्न चान्यथा ॥ ८३ ॥ विभूतिमेतां शिवयोर्योग्येभ्यो यः प्रदापयेत् ॥ संसारसागरान्मुक्तः शिवसायुज्यमाप्नुयात् ॥ ८४ ॥ कीर्तनादस्य नश्यंति महान्त्यः पापकोटयः ॥ त्रिश्चतुर्धासमभ्यस्तैर्विनश्यंति ततोऽधिकाः ॥८५॥ नश्यंत्यनिष्टरिपवो वर्द्धन्ते सुहृदस्तथा ॥ विद्या च वर्द्धते शैवी मतिस्सत्ये प्रवर्तते ॥ ८६ ॥ भक्तिः पराः शिवे साम्बे सानुगे सपरिच्छदे ॥ यद्यदिष्टतमं चान्यत्तत्तदाप्नोत्यसंशयम् ॥ ८७ ॥ अन्तः शुचिः शिवे भक्तो विस्रब्धः कीर्तयेद्यदि ॥ प्रबलैः कर्मभिः पूर्वैः फलं चेत्प्रतिबध्यते ॥ पुनः पुनः समभ्यस्येत्तस्य नास्तीह



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

दुर्लभम् ॥ ८८ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीसंहितायामुत्तरखण्डे गौरी शंकरविभूतियोगो नाम चतुर्थोऽध्याय ॥४॥ उपमन्युरुवाच ॥ विग्रहं देवदेवस्य विश्वमेतच्चराचरम् ॥ तदेवं न विजानंति पशवः पाशगौरवात् ॥१॥ तमेकमेव बहुधा वदंति यदुनंदन ॥ अजानन्तःपरं भावमविकल्पं महर्षयः ॥ २ ॥ अपरं ब्रह्मरूपं च परंब्रह्मात्मकं तथा ॥ केचिदाहुर्महादेवमनादिनिधनं परम् ॥३॥ भूतेंद्रियांतःकरणप्रधानविषयात्मकम् ॥ अपरं ब्रह्म निर्दिष्टं परं ब्रह्म चिदात्मकम् ॥४॥ बृहत्त्वाद्बृहणत्वाद्वा ब्रह्म चेत्यभिधीयते ॥ उभे ते ब्रह्मणो रूपे ब्रह्मणोऽधिपतेः प्रभोः ॥ विद्याऽविद्यास्वरूपीति कैश्चिदीशो निगद्यते ॥ ५ ॥ विद्यां तु चेतनां प्राहुस्तथाविद्यामचेतनाम् ॥ विद्याऽविद्यात्मकं चैव विश्वं विश्वगुरोर्विभोः ॥६॥ रूपमेव न संदेहो विश्वं तस्य वशे यतः ॥ भ्रांतिर्विद्या परा चेति शार्वं रूपं परं विदुः ॥ ७ ॥ अयथाबुद्धिरर्थेषु बहुधा भ्रांतिरुच्यते ॥ यथार्थाकारसंवित्तिर्विद्येति परिकीर्त्यते ॥ ८ ॥ विकल्परहितं तत्वं परमित्यभिधीयते ॥ वैपरीत्यादसच्छब्दः कथ्यते वेदवादिभिः ॥९॥ तयोः पतित्वात्तु शिवः सदसत्पतिरुच्यते॥ क्षराक्षरात्मकं प्राहुः क्षराक्षरपरं परे ॥ १० ॥ क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उभे ते परमेशस्य रूपे तस्य वशे यतः ॥ ११ ॥ तयोः परः शिवः शांतः क्षराक्षरापरस्स्मृतः ॥ समष्टिव्यष्टिरूपं च समष्टिव्यष्टिकारणम् ॥ १२ ॥ वदंति मुनयः केचिच्छिवं परमकारणम् ॥ समष्टिमाहुरव्यक्तं व्यष्टिं व्यक्तं तथैव च ॥ १३ ॥ ते रूपे परमेशस्य तदिच्छायाः प्रवर्तनात् ॥ तयोः कारणभावेन शिवं परमकारणम् ॥१४॥ कारणार्थविदः प्राहुः समष्टिव्यष्टिकारणम् ॥ जातिव्यक्तिस्वरूपीति कथ्यते कैश्चिदीश्वरः ॥ १५ ॥ या पिंडेष्वनुवर्तेत सा जातिरिति कथ्यते ॥ व्यक्तिर्व्यावृत्तिरूपं तं पिण्डजातेः समाश्रयम् ॥ १६ ॥ जातयो व्यक्तयश्चैव तदाज्ञापरिपालिताः ॥ यतस्ततो महादेवो जातिव्यक्तिवपुः स्मृतः ॥ १७ ॥ प्रधानपुरुषव्यक्तकालात्मा कथ्यते शिवः ॥ प्रधानं प्रकृतिं प्राहुःक्षेत्रज्ञं पुरुषं तथा ॥ १८ ॥ त्रयोविंशतितत्त्वानि व्यक्तमाहुर्मनीषिणः ॥ कालः कार्य्यप्रपंचस्य परिणामैककारणम् ॥ १९ ॥ एषामीशोऽधिपो धाता प्रवर्तकनिवर्तकः ॥ आविर्भावतिरोभावहेतुरेकः स्वराडजः ॥ २० ॥ तस्मा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





त्प्रधानपुरुषव्यक्तकालस्वरूपवान् ॥ हेतुर्नेताधिपस्तेषां धाता चोक्तो महेश्वरः ॥ २१ ॥ विराड्ढिरण्यगर्भात्मा कैश्चिदीशो निगद्यते ॥ हिरण्यगर्भो लोकानां हेतुर्विश्वात्मको विराट् ॥ २२ ॥ अंतर्यामी परश्चेति कथ्यते कविभिश्शिवः ॥ प्राज्ञस्तैजसविश्वात्मेत्यपरे संप्रचक्षते ॥ २३ ॥ तुरीयमपरे प्राहुः सौम्यमेव परे विदुः ॥ माता मानं च मेयं च मतिं चाहुरथापरे ॥ २४ ॥ कर्ता क्रिया च कार्य्यं च करणं कारणं परे ॥ जाग्रत्स्वप्नसुषुप्त्यात्मेत्यपरे संप्रचक्षते ॥ २५ ॥ तुरीयमपरे प्राहुस्तुर्यातीतमितीतरे ॥ तमाहुर्निर्गुणं केचिद्गुणवन्तं परे विदुः ॥ २६ ॥ केचित्संसारिणं प्राहुस्तमसंसारिणं परे ॥ स्वतंत्रमपरे प्राहुरस्वतंत्रं परे विदुः ॥ २७ ॥ घोरमित्यपरे प्राहुः सौम्यमेव परे विदुः ॥ रागवंतं परे प्राहुर्वीतरागं तथा परे ॥ २८ ॥ निष्क्रियं च परे प्राहुः सक्रियं चेतरे जनाः ॥ निरिंद्रियं परे प्राहुः सेंद्रियं च तथापरे ॥ २९ ॥ ध्रुवमित्यपरे प्राहुस्तमध्रुवामितीरतेऽरूपं केचिदाहुर्वै रूपवंतं परे विदुः ॥ ३० ॥ अदृश्यमपरे प्राहुर्दृश्यमित्यपरे विदुः ॥ वाच्यमित्यपरे प्राहुरवाच्यमिति चापरे ॥ शब्दात्मकं परे प्राहुश्शब्दातीतमथापरे ॥३१॥ केचिच्चिन्तामयं प्राहुश्चिन्तया रहितं परे॥ज्ञानात्मकं परे प्राहुर्विज्ञानमिति चापरे ॥ ॥३२॥ केचिज्ज्ञेयमिति प्राहुरज्ञेयमिति केचन ॥ परमेके तमेवाहुरपरं च तथा परे ॥३३॥ एवं विकल्प्यमानं तु याथात्म्यं परमेष्ठिनः ॥ नाध्यवस्यंति मुनयो नानाप्रत्ययकारणात् ॥३४॥ ये: पुनस्सर्वभावेन प्रपन्नाः परमेश्वरम् ॥ ते हि जानंत्ययत्नेन शिवं परमकारणम् ॥ ३५ ॥ यावत्पशुर्नैव पश्यत्यनीशं[1] पुराणं भुवनस्येशितारम् ॥ तावद्दुःखे वर्तते बद्धपाशः संसारेऽस्मिश्चक्रनेमिक्रमेण ॥३६॥ यदा[2] पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ॥ तदाविद्वान्पुण्यपापे विधूय निरंजनः परममुपैति साम्यम् ॥ ३७ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे पशुपतित्वज्ञानयोगे नाम पंचमोऽध्यायः ॥ ५ ॥

१ नास्तीशो यस्मात्सोऽनीश इति बहुव्रीहिः परन्तु क्लिष्टकल्पनापेक्षया यावत्पशुश्चेश्वरं न प्रपश्येदिति पाठेऽर्थस्सुगमः । २ यदा पश्यो वीक्षते रुक्मेति पाठे तु भग्नप्रक्रमस्तस्मदात्मनेपदमार्षमित्येव समाधिः ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पंचसौगंधिकोपेतं ताम्बूलं च निवेदयेत्॥६४॥प्रोक्षयेत्प्रोक्षणीयानि गाननाटयानि कारयेत्॥लिंगादौ शिवयोश्चिन्तां कृत्वा शक्त्य जपेच्छिवम्॥६५॥ प्रदक्षिणं प्रणामं च स्तवं चात्मसमर्पणम्॥विज्ञापनं च कार्याणां कुर्याद्विनयपूर्वकम्॥६६॥अर्घ्यं पुष्पांजलिं दत्त्वा बद्ध्वा मुद्रां यथाविधि॥पश्चात्क्षमापयेद्देवमुद्वास्यात्मनि चिंतयेत्॥६७॥पाद्यादिमुखवासांतमर्घ्याद्यं चातिसंकटे॥पुष्पविक्षेपमात्रं वा कुर्याद्भावपुरस्सरम्॥६८॥तावतैव परो धर्मो भावेन सुकृतो भवेत्॥असंपूज्य न भुञ्जीत शिवमाप्राणसंचरात्॥६९॥यदि पापस्तु भुंजीत स्वैरं तस्य न निष्कृतिः ॥ प्रमादेन तु भुंक्ते चेत्तदुद्गीर्य प्रयत्नतः॥७०॥स्नात्वा द्विगुणमभ्यर्च्य देवं देवीमुपोष्य च ॥ शिवस्या युतमभ्यस्येद्ब्रह्मचर्यपुरस्सरम् ॥ ७१ ॥ परेद्युश्शक्तितो दत्त्वा सुवर्णाद्यं शिवाय च ॥ शिवभक्ताय वा कृत्वा महापूजां शुचिर्भवेत् ॥ ७२ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शास्त्रोक्तशिवपूजनवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

उपमन्युरुवाच ॥ अनुक्तं चात्र पूजायाः कमलोपभयादिव ॥ यत्तदन्यत्प्रवक्ष्यामि समासान्न तु विस्तरात् ॥ १ ॥ हविर्निवेदनात्पूर्वं दीपदानादनन्तरम् ॥ कुर्यादावरणाभ्यर्चां प्राप्ते नीराजनेऽथ वा ॥ २ ॥ तत्रेशानादिसद्यांतं रुद्राद्यस्त्रांतमेव च ॥ शिवस्य वा शिवायाश्च प्रथमावरणे जपेत् ॥ ३ ॥ ऐशान्यां पूर्वभागे च दक्षिणे चोत्तरे तथा ॥ पश्चिमे च तथाग्नेय्यामैशान्यां नैर्ऋते तथा ॥ ४ ॥ वायव्यां पुनरैशान्यां चतुर्दिक्षु ततः परम् ॥ गर्भावरणमाख्यातं मन्त्रसंघातमेव वा ॥५॥ हृदयाद्यस्त्रपर्यंतमथवापि समर्चयेत् ॥ तद्बहिः पूर्वतः शक्रं यमं दक्षिणतो यजेत् ॥६॥ वरुणं वारुणे भागे धनदं चोत्तरे बुधः ॥ ईशमैशेऽनलं स्वीये नैर्ऋते निर्ऋतिं यजेत् ॥ ७ ॥ मारुते मारुतं विष्णुं नैर्ऋते विधिमैश्वरे ॥ बहिः पद्मस्य वज्राद्यान्यब्जांतान्यायुधान्यपि ॥ ८ ॥ प्रसिद्धरूपाण्याशासु लोकेशानां क्रमाद्यजेत् ॥ देवं देवीं च संप्रेक्ष्य सर्वावरणदेवताः ॥ ९ ॥ बद्धांजलिपुटा ध्येयाः समासीना यथासुखम् ॥ सर्वावरणदेवानां स्वाभिधानैर्नमोयुतैः ॥ १० ॥ पुष्पैः संपूजनं कुर्यान्नत्वा सर्वान्यथाक्रमम् ॥ गर्भावरणमेवापि यजेत्स्वावरणेन वा ॥ ११ ॥ योगे ध्याने जपे होमे वाह्ये वाभ्यंतरेऽपि वा ॥ हविश्च षड्विधं देयं शुद्धं मुद्गान्नमेव च ॥ १२ ॥ पायसं दधिसंमिश्रं गौडं च मधु



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





नाप्लुतम् ॥ एतेष्वेकमनेकं वा नानाव्यंजनसंयुतम् ॥ १३ ॥ गुडखंडान्वितं दद्यान्मथितं दधि चोत्तमम् ॥ भक्ष्याण्यपूपमुख्यानि स्वादुमंति फलानि च ॥ १४ ॥ रक्तचन्दनपुष्पाढ्यं पानीयं चातिशीतलम् ॥ मृदु एलारसाक्तं च खण्डं पूगफलस्य च ॥ १५ ॥ दलानि नागवल्ल्याश्च युक्तानि खदिरादिभिः ॥ गौराणि स्वर्णवर्णानि विहितानि शिवानि च ॥ शैलमेव सितं चूर्णं नातिरूक्षं न दूषितम् ॥ १६ ॥ कर्पूरं चाथ कंकोलं जात्यादि च नवं शुभम् ॥ आलेपनं चन्दनं स्यान्मूलकाष्ठंरजोमयम् ॥ १७ ॥ कस्तूरिका कुंकुमं च रसो मृगमदात्मकः ॥ पुष्पाणि सुरभीण्येव पवित्राणि शुभानि च ॥ १८ ॥ निर्गंधान्युग्रगंधानि दूषितान्युषितानि च ॥ स्वयमेवविशीर्णानि न देयानि शिवार्चने ॥ १९ ॥ वासांसि च मृदून्येव तपनीयमयानि च ॥ विद्युद्वलयकलानि भूषणानि विशेषतः ॥२०॥ सर्वाण्येतानि कर्पूरनिर्यासागुरुचन्दनैः ॥ आधूपितानि पुष्पौघैर्वासितानि समंततः ॥२१॥ चन्दनागुरुकर्पूरकाष्ठगुग्गुलुचूर्णकैः ॥ घृतेन मधुना चैव सिद्धो धूपः प्रशस्यते ॥ २२ ॥ कपिलासम्भवेनैव घृतेनातिसुगन्धिना ॥ नित्यं प्रदीपिता दीपाः शस्ताः कर्पूरसंयुताः ॥ २३ ॥ पञ्चगव्यं च मधुरं पयो दधि घृतं तथा ॥ कपिलासम्भवं शम्भोरिष्टं स्नाने च पानके ॥ २४ ॥ आसनानि च भद्राणि गजदंतमयानि च ॥ सुवर्णरत्नयुक्तानि चित्राण्यास्तरणानि च ॥२५॥ मृदूपधानयुक्तानि सूक्ष्मतूलमयानि च ॥ उच्चावचानि रम्याणि शयनानि सुखानि च ॥ २६ ॥ नद्यस्ससमुद्रगामिन्या नदाद्वाम्भः समाहृतम् ॥ शीतञ्च वस्त्रपूतं तद्विशिष्टं स्नानपानयोः ॥ २७ ॥ छत्रं शशिनिभं चारु मुक्तादामविराजितम् ॥ नवरत्नचितं दिव्यं हेमदण्डमनोहरम् ॥ ॥२८॥ चामरे च सिते सूक्ष्मे चामीकरपरिष्कृते ॥ राजहंसद्वयाकारे रत्नदंडोपशोभिते ॥ २९ ॥ दर्पणं चापि सुस्निग्धं दिव्यगन्धानुलेपनम् ॥ समंताद्रत्नसञ्छन्न स्रग्वरैश्चापि भूषितम् ॥३०॥ गम्भीरनिनदः शंखो हंसकुंदेन्दुसन्निभः ॥ आस्वपृष्ठादिदेशेषु रत्नचामीकराचितः ॥ ३१ ॥ काहलानि च रम्याणि नानानादकराणि च ॥ सुवर्णनिर्मितान्येव मौक्तिकालंकृतानि च ॥ ३२ ॥ भेरीमृदंगमुरजतिमिच्छपटहादयः ॥ समुद्रकल्पसन्नादाः कल्पनीयाः प्रयत्नतः ॥ ३३ ॥ भांडान्यपि च रम्याणि पत्राण्यपि च



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

कृत्स्नशः ॥ तदाधाराणि सर्वाणि सौवर्णान्येव साधयेत् ॥३४॥ आलयं च महेशस्य शिवस्य परमात्मनः ॥ राजावसथवत्कल्प्यं शिल्पशास्त्रोक्तलक्षणम् ॥३५॥ उच्चप्राकारसंभिन्नं भूधराकारगोपुरम् ॥ अनेकरत्नसंछन्नं हेमद्वारकपाटकम् ॥ ३६ ॥ तप्तजांबूनदमयं रत्नस्तम्भशतावृतम् ॥ मुक्तादामवितानाढ्यं विद्रुमद्वारतोरणम् ॥ ३७॥ चामीकरमयैर्दिव्यैर्मुकुटैः कुम्भलक्षणैः ॥ अलंकृतशिरोभागमस्त्रराजेनचिह्नितम् ॥ ३८ ॥ राजन्यार्हनिवासैश्च राजवीथ्यादिशोभितैः ॥ प्रोच्छ्रितप्रांशुशिखरैः प्रासादैश्च समंततः ॥ ३९ ॥ आस्थानस्थानवर्यैश्च स्थितैर्दिक्षु विदिक्षु च ॥ अत्यन्तालंकृतप्रांतमंतरावरणैरिव ॥ ४० ॥ उत्तमस्त्रीसहस्रैश्च नृत्यगेयविशारदैः ॥ वेणुवीणाविदग्धैश्च पुरुषैर्बहुभिर्युतम् ॥ ४१ ॥ रक्षितं रक्षिभिर्वीरैर्गजवाजिरथान्वितैः ॥ अनेकपुष्पवाटीभिरनेकैश्च सरोवरैः ॥ ४२ ॥ दीर्घिकाभिरनेकाभिर्दिग्विदिक्षु विराजितम् ॥ वेदवेदांततत्त्वज्ञैश्शिवशास्त्रपरायणैः ॥ ४३ ॥ शिवाश्रमरतैर्भक्तैः शिवशास्त्रोक्तलक्षणैः ॥ शांतैः स्मितमुखैः स्फीतैः सदाचारपरायणैः ॥ ४४ ॥ शैवैर्माहेश्वरैश्चैव श्रीमद्भिस्सेवितद्विजैः ॥ एवमंतर्बहिर्वाथयथाशक्तिविनिर्मितैः ॥ ४५॥ स्थाने शिलामये दांते दारवे चेष्टकामये ॥ केवलं मृन्मये वापि पुण्यारण्येऽथ वा गिरौ ॥४६॥ नद्यां देवालयेऽन्यत्र देशे वाथ गृहे शुभे ॥ आढ्यो वाथ दरिद्रो वा स्वकां शक्तिमवंचयन् ॥ द्रव्यैर्न्यायार्जितैरेव भक्त्या देवं समर्चयेत् ॥४७॥ अथान्यायार्जितैश्चापि भक्त्या चेच्छिवमर्चयेत ॥ न तस्य प्रत्यवायोऽस्ति भाववश्यो यतः प्रभुः ॥ ४८ ॥ न्यायार्जितैरपि द्रव्यैरभक्त्या पूजयेद्यदि ॥ न तत्फलमवाप्नोति भक्तिरेवात्र कारणम्॥४९॥भक्त्या वित्तानुसारेण शिवमुद्दिश्य यत्कृतम् ॥ अल्पे महति वा तुल्य फलमाढ्यदरिद्रयोः ॥५०॥ भक्त्या प्रचोदितः कुर्यादल्पवित्तोपि मानवः॥महाविभवसारोपि न कुर्याद्भक्तिवर्जितः ॥ ५१ ॥ सर्वस्वमपि यो दद्याच्छिवे भक्तिविवर्जितः ॥ न तेन फलभाक्स स्याद्भक्तिरेवात्र कारणम् ॥ ॥ ५२ ॥ न तत्तपोभिरत्युग्रैर्न च सर्वैर्महामखैः ॥ गच्छेच्छिवपुरं दिव्यं मुक्त्वा भक्तिं शिवात्मिकाम् ॥ ५३ ॥

---

१ सम्बन्धमनुवर्तते इति भाष्यात्क्वचिद्घञन्तस्यापि क्लीबतात एव शेषं रामवदित्यादि संगच्छते । २ त्रिशूलेनेति भावः ।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





गुह्याद्गुह्यतरं कृष्ण सर्वत्र परमेश्वरे॥शिवे भक्तिर्न संदेहस्तया भक्तो विमुच्यते॥५४॥शिव मंत्रजपो ध्यानं होमो यज्ञस्तपः श्रुतम्॥दानमध्ययनं सर्वं भावार्थं नात्र संशयः॥५५॥भावहीनो नरस्सर्वं कृत्वापि न विमुच्यते॥भावयुक्तः पुनस्सर्वमकृत्वापि विमुच्यते॥५६॥चांद्रायणसहस्रैश्च प्राजापत्यशतैस्तथा॥मासोपवासैश्चान्यैश्च शिवभक्तस्य किं पुनः॥५७॥अभक्ता मानवाश्चास्मिंल्लोके गिरिगुहासु च॥तपंति चाल्पभोगार्थं भक्तो भावेन मुच्यते॥५८॥सात्त्विकं मुक्तिदं कर्म सत्त्वे वै योगिनः स्थिताः॥राजसं सिद्धिदं कुर्युः कर्मिणो रजसावृताः॥५९॥असुरा राक्षसाश्चैव तमोगुणसमन्विताः ॥ ऐहिकार्थं यजन्तीशं नराश्चान्येऽपि तादृशाः॥६०॥तामसं राजसं वापि सात्त्विकं भावमेव च ॥ आश्रित्य भक्त्या पूजाद्यं कुर्वन्भद्रं समश्नुते॥६१॥यतः पापार्णवात्त्रातुं भक्तिर्नौरिव निर्मिता ॥ तस्माद्भक्त्युपपन्नस्य रजसा तमसा च किम्॥६२॥अन्त्यजो वाधमो वापि मूर्खो वा पतितोऽपिवा ॥ शिवं प्रपन्नश्चेत्कृष्ण पूज्यस्सर्वसुरासुरैः ॥ ६३ ॥ तस्मात्सर्वप्रयत्नेन भक्त्यैव शिवमर्चयेत् ॥ अभुक्तानां क्वचिदपि फलं नास्ति यतस्ततः ॥ ६४ ॥ वक्ष्याम्यतिरहस्यं ते शृणु कृष्ण वचो मम ॥ वेदैश्शास्त्रैर्वेदविद्भिर्विचार्य सुविनिश्चितम् ॥ ६५ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवशास्त्रोक्तपूजनवर्णनं नाम पंचविंशोऽध्यायः ॥२५॥ उपमन्युरुवाच॥ब्रह्मघ्नो वा सुरापो वा स्तेयीवा गुरुतल्पगः॥मातृहा पितृहा वापि वीरहा भ्रूणहापि वा ॥ १ ॥ संपूज्यामन्त्रकं भक्त्या शिवं परमकारणम् ॥ तैस्तैः पापैः प्रमुच्येत वर्षैर्द्वादशभिः क्रमात् ॥२॥ तस्मात्सर्वप्रयत्नेन पतितोऽपि यजेच्छिवम् ॥ भक्तश्चेन्नापरः कश्चिद्भिक्षाहारो जितेंद्रियः ॥ ३ ॥ कृत्वापि सुमहत्पापं भक्त्या पंचाक्षरेण तु ॥ पूजयेद्यदि देवेशं तस्मात्पापात्प्रमुच्यते ॥४॥ अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः ॥ तेषामेतैर्व्रतैर्नास्ति शिवलोक समागमः ॥ ५ ॥ भक्त्या पंचाक्षरेणैव यः शिवं सकृदर्चयेत् ॥ सोपि गच्छेच्छिवस्थानं शिवमन्त्रस्य गौरवात्॥६॥ तस्मात्तपांसि यज्ञांश्च सर्वे सर्वस्वदक्षिणाः ॥ शिवमूर्त्यर्चनस्यैते कोट्यंशेनापि नो समाः॥७॥ बद्धो वाप्यथ मुक्तो वा पश्चात्पञ्चाक्षरेण चेत् ॥ पूजयन्मुच्यते भक्तो नात्र कार्या विचारणा ॥ ८ ॥ अरुद्रो वा सरुद्रो वा सूक्तेन शिवमर्चयेत् ॥ यः सकृत्पतितो



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वापिमूढो वा मुच्यते नरः ॥ ९ ॥ षडक्षरेण वा देवं सूक्तमन्त्रेण पूजयेत् ॥ शिवभक्तो जितक्रोधो ह्यलब्धो लब्ध एव च ॥ १० ॥ अलब्धाल्लब्ध एवात्र विशिष्टो नात्र संशयः ॥ स ब्रह्मांगेन वा तेन सहंसेन विमुच्यते ॥ ११ ॥ तस्मान्नित्यं शिवं भक्त्या सूक्तमन्त्रेण पूजयेत् ॥ एककालं द्विकालं वा त्रिकालं नित्यमेव वा ॥ १२ ॥ येऽर्चयंति महादेवं विज्ञेयास्ते महेश्वराः ॥ ज्ञानेनात्मसहायेन नार्चितो भगवाञ्छिवः ॥ १३ ॥ स चिरं संसरत्यस्मिन्संसारे दुःखसागरे ॥ दुर्लभं प्राप्य मानुष्यं मूढो नार्चयते शिवम् ॥ १४ ॥ निष्फलं तस्य तज्जन्म मोक्षाय न भवेद्यतः ॥ दुर्लभं प्राप्य मानुष्यं येऽर्चयन्ति पिनाकिनम् ॥ १५ ॥ तेषां हि सफलं जन्म कृतार्थास्ते नरोत्तमाः ॥ भवभक्तिपरा ये च भवप्रणतचेतसः ॥ १६ ॥ भवसंस्मरणोद्युक्ता न ते दुःखस्य भागिनः ॥ भवनानि मनोज्ञानि विभ्रमाभरणाः स्त्रियः ॥ १७ ॥ धनं चातृप्तिपर्य्यन्तं शिवपूजाविधेः फलम् ॥ ये वाञ्छन्ति महाभोगान्राज्यं च त्रिदशालये ॥ १८ ॥ ते वाञ्छन्ति सदाकालं हरस्य चरणाम्बुजम् ॥ सौभाग्यं कान्तिमद्रूपं सत्त्वं त्यागार्द्रभावता ॥ १९ ॥ शौर्यं वै जगति ख्यातिश्शिवमर्चयतो भवेत् ॥ तस्मात्सर्वं परित्यज्य शिवैकाहितमानसः ॥ २० ॥ शिवपूजाविधिं कुर्याद्यदीच्छेच्छिवमात्मनः ॥ त्वरितं जीवितं याति त्वरितं याति यौवनम्॥२१॥त्वरितं व्याधिरभ्येति तस्मात्पूज्यः पिनाकधृक्॥ यावन्नायाति मरणं यावन्नाक्रमते जरा ॥२२॥ यावन्नेन्द्रियवैकल्यं तावत्पूजय शंकरम्॥ नशिवार्चनतुल्योऽस्ति धर्मोऽन्यो भुवनत्रये ॥ २३ ॥ इति विज्ञाय यत्नेन पूजनीयस्सदाशिवः ॥ द्वारयागं जवनिकां परिवारबलिक्रियाम् ॥ २४ ॥ नित्योत्सवं च कुर्वीत प्रसादे यदि पूजयेत् ॥ हविर्निवेदनादूद्र्ध्वं स्वयं चानुचरोऽपि वा ॥ २५ ॥ प्रसादपरिवारेभ्यो बलिं दद्याद्यथाक्रमम् ॥ निर्गम्य सह वादित्रैस्तदाशाभिमुखः स्थितः ॥ २६ ॥ पुष्पं धूपं च दीपश्च दद्यादन्नं जलैः सह ॥ ततो दद्यान्महापीठे तिष्ठन्बलिमुदङ्मुखः ॥ २७ ॥ ततो निवेदितं देवे यत्तदन्नादिकं पुरा ॥ तत्सर्वं सावशेषं वा चण्डाय विनिवेदयेत् ॥ २८ ॥ हुत्वा च विधिवत्पश्चात्पूजाशेषं समापयेत् ॥ कृत्वा प्रयोगं विधिवद्यावन्मन्त्रं जपं ततः ॥ २९ ॥ नित्योत्सवं प्रकुर्वीत यथोक्तं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





शिवशासने ॥ विपुले तैजसे पात्रे रक्तपद्मोपशोभिते ॥ ३० ॥ अस्त्रं पाशुपतं दिव्यं तत्रावाह्य समर्चयेत् ॥ शिवस्यारोप्य तत्पात्रं द्विजस्यालंकृतस्य च ॥ ३१ ॥ न्यस्तास्त्रवपुषा तेन दीप्तयष्टिधरस्य च ॥ प्रासादपरिवारेभ्यो बहिर्मंगलनिस्वनैः ॥ ३२ ॥ नृत्यगेयादिभिश्चैव सह दीपध्वजादिभिः ॥ प्रदक्षिणत्रयं कृत्वा न द्रुतं चाविलम्बितम् ॥ ३३ ॥ महापीठं समावृत्य त्रिःप्रदक्षिणयोगतः ॥ पुनः प्रविष्टो द्वारस्थो यजमानः कृताञ्जलिः ॥ आदायाभ्यंतरं नीत्वा ह्यस्त्रमुद्वासयेत्ततः ॥ ३४ ॥ प्रदक्षिणादिकं कृत्वा यथापूर्वोदितं क्रमात् ॥ आदाय चाष्टपुष्पाणि पूजामथ समापयेत ॥३५॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे सांगोपांगपूजाविधानवर्णनं नाम षड्विंशोऽध्यायः ॥२६॥ उपमन्युरुवाच ॥ अथाग्निकार्यं वक्ष्यामि कुण्डे वा स्थंडिलेऽपि वा ॥ वेद्यां वा ह्यायसे पात्रे मृन्मये वा नवे शुभे ॥ ॥ १ ॥ आधायाग्निं विधानेन संस्कृत्य च ततः परम् ॥ तत्राराध्य महादेवं होमकर्म समाचरेत् ॥ २ ॥ कुण्डं द्विहस्तमानं वा हस्तमात्रमथापि वा ॥ वृत्तं वा चतुरस्रं वा कुर्याद्वेदिं च मण्डलम् ॥३॥ कुण्डं विस्तारवन्निम्नं तन्मध्येऽष्टदलाम्बुजम् ॥ चतुरंगुलमुत्सेधं तस्य द्व्यंगुलमेव वा ॥४॥ वितस्तिर्द्विगुणोन्नत्या नाभिमन्तः प्रचक्षते ॥ मध्यं च मध्यमांगुल्य मध्यमोत्तमपर्वणोः ॥ ५ ॥ अंगुलैः कथ्यते सद्भिश्चतुर्विंशतिभिः करः ॥ मेखलानां त्रयं वापि द्वयमेकमथापि वा ॥६॥ यथाशोभं प्रकुर्वीत श्लक्ष्णमिष्टं मृदा स्थिरम् ॥ अश्वत्थपत्रवद्योनिं गजाधरवदेव वा ॥ ७ ॥ मेखलामध्यतः कुर्यात्पश्चिमे दक्षिणेऽपि वा ॥ शोभनामग्नितः किंचिन्निम्नामुन्मीलिकां शनैः॥८॥अग्रेण कुण्डाभिमुखीं किंचिदुत्सृज्य मेखलाम्॥नोत्सेधनियमो वेद्याः सा मार्दी वाथ सैकती॥९॥मंडलं गोशकृत्तोयैर्मानं पात्रस्य नोदितम्॥कुण्डं च मृन्मयं वेदिमालिपेद्गोमयांबुना॥१०॥प्रक्षाल्य तापयेत्पात्रं प्रोक्षयेदन्यदंभसा॥स्वसूत्रोक्तप्रकारेण कुण्डादौ बिलिखेत्ततः॥११॥संप्रोक्ष्य कल्पयेद्दर्भैः पुष्पैर्वा वह्निविष्टरम् ॥ अर्चनार्थं च होमार्थं सर्वद्रव्याणि साधयेत् ॥१२॥ प्रक्षाल्यक्षालनीयानि प्रोक्षण्या प्रोक्ष्य शोधयेत ॥ मणिजं काष्ठजं

१ अदन्तत्वमार्षम् ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वाथ श्रोत्रियागारसम्भवम्॥१३॥अन्यं वाभ्यार्हितं वह्निं ततः साधार मानयेत् ॥ त्रिः प्रदक्षिणमावृत्य कुण्डादेरुपरि क्रमात्॥१४॥
वह्निबीजं समुच्चार्य त्वादधीताग्निमासने ॥ योनिमार्गेण वा तद्वदात्मनः संमुखेन वा ॥ १५ ॥ नियोगः प्रदेश सर्वं कुंडं कुर्याद्विच
क्षणः ॥ स्वनाभ्यंतःस्थितं वह्निं तद्रंध्राद्विस्फुलिंगवत् ॥१६॥ निर्गम्यपावके बाह्ये लीनं बिंबाकृति स्मरेत् ॥ आज्यसंस्कारपर्यंतम
न्वाधानपुरस्सरम् ॥ १७ ॥ स्वसूत्रोक्तक्रमात्कुर्यान्मूलमन्त्रेण मन्त्रवित् ॥ शिवमूर्तिं समभ्यर्च्य ततो दक्षिणपार्श्वतः ॥ १८ ॥
न्यस्य मन्त्रं घृते मुद्रां दर्शयेद्धेनुसंज्ञिताम् ॥ स्रुक्स्रुवौ तैजसौ ग्राह्यौ न कांस्यायससैसकौ ॥१९॥ यज्ञदारुमयौ वापि स्मार्तौ वा
शिल्पसम्मतौ ॥ पर्णे वा ब्रह्मवृक्षादेरच्छिद्रे मध्य उत्थिते ॥ २० ॥ संमृज्य दर्भैस्तौ वह्नौ संताप्य प्रोक्षयेत्पुनः ॥ पारार्षच्चर्यस्वसूत्रो
क्तक्रमेण शिवपूर्वकैः ॥ २१ ॥ जुहुयादष्टभिर्बीजैरग्निसंस्कारसिद्धये ॥ भ्रुंस्तुंब्रुश्रुं क्रमेणैव पुंड्रंद्रमित्यतः परम् ॥ २२ ॥ बीजानि सप्त
सप्तानां जिह्वानामनुपूर्वशः ॥ त्रिशिखा मध्यमा जिह्वा बहुरूपसमाह्वया ॥ २३ ॥ रक्ताग्नेयी नैर्ऋती च कृष्णान्या सुप्रभा मता॥
अतिरिक्ता मरुज्जिह्वा स्वनामानुगुणप्रभा॥२४॥स्वबीजानन्तरं वाच्या स्वाहांतश्च यथाक्रमम् ॥ जिह्वामंत्रैस्तु तैर्हुत्वाज्यं जिह्वास्त्वे
कैकश क्रमात् ॥ २५ ॥ रं वह्नयेति स्वाहेति मध्ये हुत्वाहुतित्रयम् ॥ सर्पिषा वा समिद्भिर्वा परिषेचनमाचरेत् ॥ २६ ॥
एवं कृते शिवाग्निः स्यात्स्मरेत्तत्र शिवासनम्॥तत्रावाह्य यजेद्देवमर्धनारीश्वरं शिवम् ॥ दीपान्तं परिषिच्याथ समिद्धोमं समाचरेत्
॥२७॥ ताः पालाश्यः परा वापि याज्ञिया द्वादशांगुलाः ॥ अवक्रा न स्वयं शुष्कास्सत्वचो निर्व्रणाः समा ॥२८॥ दशांगुला वा
विहिताः कनिष्ठांगुलिसंमिताः ॥ प्रादेशमात्रा वालाभे होतव्याः सकला अपि ॥२९॥ दूर्वापत्रसमाकारां चतुरंगुलमायताम्॥दद्यादा
ज्याहुतिं पश्चादन्नमक्षप्रमाणतः॥३०॥लाजांस्तथा सर्षपांश्च यवांश्चैव तिलांस्तथा ॥ सर्पिषाक्तानि भक्ष्याणि लेह्यचोष्याणि सम्भवे॥
॥ ३१ ॥ दशैवाहुतयस्तत्र पञ्च वा त्रितयं च वा ॥ होतव्याः शक्तितो दद्यादेकमेवाथ वाहुतिम् ॥३२॥ श्रुवेणाज्यं समित्याद्यास्रुचा
शेषात्करेण वा ॥ तत्र दिव्येन होतव्यं तीर्थेनार्षेण वा तथा ॥३३॥ द्रव्येणैकेन वाऽलाभे जुहुयाच्छ्रद्धया पुनः ॥ प्रायश्चित्ताय जुहुया



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





न्मंत्रयित्वाहुतित्रयम् ॥ ३४ ॥ ततो होमविशिष्टेन घृतेनापूर्य्य वै स्रुचम् ॥ निधाय पुष्पं तस्याग्रे श्रुवेणाधोमुखेन ताम् ॥ ३५ ॥ सदर्भेण समाच्छाद्य मूलेनांजलिनोत्थितः ॥ वौषडंतेन जुहुयाद्धारां तु यवसंमिताम् ॥३६॥ इत्थं पूर्णाहुतिं कृत्वा परिषिंचेच्च पूर्ववत् ॥ तत उद्वास्य देवेशं गोपयेत्तु हुताशनम् ॥ ३७ ॥ तमप्युद्वास्य वा नाभौ यजेत्संधाय नित्यशः ॥ अथवा वह्निमानीय शिवशास्त्रोक्तवर्त्मना ॥ ३८ ॥ वागीशीगर्भसंभूतं संस्कृत्य विधिवद्यजेत् ॥ अन्वाधानं पुनः कृत्वा परिधीन् परिधाय च॥३९॥ पात्राणि द्वन्द्वरूपेण निक्षिप्येष्ट्वा शिवं ततः ॥ संशोध्य प्रोक्षणीपात्रं प्रोक्ष्यतानि तदंभसा ॥ ४० ॥ प्रणीतापात्रमैशान्यां विन्यस्यापूरितं जलैः ॥ आज्यसंस्कारपर्यंतं कृत्वा सशोध्य स्रुक्स्रुवौ॥४१॥गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः ॥ कृत्वा पृथक्पृथग्घुत्वा जातमग्निं विचिन्तयेत् ॥ ४२ ॥ त्रिपादं सप्तहस्तं च चतुःशृंगं द्विशीर्षकम् ॥ मधुपिंगं त्रिनयनं सकपर्देन्दुशेखरम् ॥ ४३ ॥ रक्तं रक्ताम्बरालेपं माल्यभूषणभूषितम् ॥ सर्वलक्षणसंपन्नं सोपवीतं त्रिमेखलम् ॥ ४४ ॥ शक्तिमन्तं स्रुक्स्रुवौ च दधानं दक्षिणे करे ॥ तोमरं तालवृंतं च घृतपात्रं तथेतरैः॥४५॥जातं ध्यात्वैवमाकारं जातकर्म समाचरेत् ॥ नालापनयनं कृत्वा ततः संशोध्य सूतकम् ॥४६॥शिवाग्निरुचिनामास्य कृत्वाहुति पुरस्सरम् ॥ पित्रोर्विसर्जनं कृत्वा चौलोपनयनादिकम् ॥४७॥ अप्तोर्यामावसानान्तं कृत्वा संस्कारमस्य तु ॥ आज्यधारादिहोमं च कृत्वा स्विष्टकृतं ततः॥४८॥रमित्यनेन बीजेन परिषिंचेत्ततः परम्॥ब्रह्मविष्णुशिवेशानां लोकेशानां तथैव च ॥ ४९ ॥ तदस्त्राणां च परितः कृत्वा पूजां यथाक्रमम् ॥ धूपदीपादिसिद्ध्यर्थं वह्निमुद्धृत्य कृत्यवित् ॥५०॥ साधयित्वाज्य पूर्वाणि द्रव्याणि पुनरेव च ॥ कल्पयित्वासनं वह्नौ तत्रावाह्य यथापुरा ॥ ५१ ॥ संपूज्य देवं देवीं च ततः पूर्णांतमाचरेत् ॥ अथ वा स्वाश्रमोक्तं तु वह्निकर्म शिवार्पणम् ॥ ५२ ॥ बुद्ध्वा शिवाश्रमी कुर्यान्न च तत्रापरो विधिः ॥ शिवाग्नेर्भस्म संग्राह्यमग्निहोत्रोद्भवं तु वा ॥ ५३ ॥ वैवाहोग्निभवं वापि पक्वं शुचि सुगंधि च ॥ कपिलायाः शकृच्छस्तं गृहीतं गगने पतत् ॥५४॥ न क्लिन्नं नातिकठिनं न दुर्गन्धं न शोषितम् ॥ उपर्यधः परित्यज्य गृह्णीयात्पतितं यदि ॥५५॥ पिंडीकृत्य शिवाग्न्यादौ तत्क्षिपे



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

न्मूलमंत्रतः ॥ अपक्वमतिपक्वं च संत्यज्य भसितं सितम् ॥ ५६ ॥ आदाय वा समालोड्य भस्माधारे विनिक्षिपेत् ॥ तैजसं दारवं वापि मृन्मयं शैलमेव च ॥५७॥ अन्यद्वा शोभनं शुद्धं भस्माधारं प्रकल्पयेत् ॥ समे देशे शुभे शुद्धे धनवद्भस्म निक्षिपेत् ॥ ५८ ॥ न चायुक्तकरे दद्यान्नैवाशुचितले क्षिपेत् ॥ न संस्पृशेच्च नीचांगैर्नोपेक्षेत न लंघयेत् ॥ ५९ ॥ तस्माद्भसितमादाय विनियुंजीत मन्त्रतः ॥ कालेषूक्तेषु नान्यत्र नायोग्येभ्यः प्रदापयेत् ॥ ६० ॥ भस्मसंग्रहणं कुर्याद्देवेऽनुद्वासिते सति ॥ उद्वासने कृते यस्माच्च ण्डभस्म प्रजापते ॥ ६१ ॥ अग्निकार्ये कृते पश्चाच्छिवशास्त्रोक्तमार्गतः ॥ स्वसूत्रोक्तप्रकाराद्वा बलिकर्म समाचरेत् ॥ ६२ ॥ अथ विद्यासनं न्यस्य सुप्रलिप्ते तु मण्डले ॥ विद्याकोशं प्रतिष्ठाप्य यजेत्पुष्पादिभिः क्रमात् ॥ ६३ ॥ विद्यायाः पुरतः कृत्वा गुरोरपि च मण्डलम् ॥ तत्रासनवरं कृत्वा पुष्पाद्यैर्गुरुमर्चयेत् ॥ ६४ ॥ ततोऽनुपूजयेत्पूज्यान् भोजयेच्च बुभुक्षितान् ॥ ततस्स्वयं च भुंजीत शुद्धमन्नं यथासुखम् ॥ ॥ ६५ ॥ निवेदितं च वा देवे तच्छेषं चात्मशुद्धये ॥ श्रद्दधानो न लोभेन न चण्डाय समर्पितम् ॥६६॥ गन्धमाल्यादि यच्चान्यत्तत्राप्येष समो विधिः ॥ न तु तत्र शिवोस्मीति बुद्धिं कुर्याद्विचक्षणः ॥६७॥ भुक्त्वाचम्य शिवं ध्यात्वा हृदये मूलमुच्चरेत् ॥ कालशेषं नयेद्योग्यैः शिवशास्त्रकथादिभिः ॥६८॥ रात्रौ व्यतीते पूर्वांशे कृत्वा पूजां मनोहराम् ॥ शिवयोः शयनं त्वेकं कल्पयेदति शोभनम् ॥ ६९ ॥ भक्ष्यभोज्यांबरालेपपुष्पमालादिकं तथा ॥ मनसा कर्मणा वापि कृत्वा सर्वं मनोहरम् ॥ ७० ॥ ततो देवस्य देव्याश्च पादमूले शुचिस्स्वपेत् ॥ गृहस्थो भार्यया सार्द्धं तदन्येऽपि तु केवलाः ॥ ७१ ॥ प्रत्यूषसमयं बुद्ध्वा मात्रामाद्यामुदीरयेत् ॥ प्रणम्य मनसा देवं सांबं सगणमव्ययम् ॥७२॥ देशकालोचितं कृत्वा शौचाद्यमपि शक्तितः ॥ शंखादिनिनदैर्दिव्यैर्देवं देवीं च बोधयेत्॥७३॥ततस्तत्समयोन्निद्रैः पुष्पैरतिसुगंधिभिः ॥ निर्वर्त्य शिवयोः पूजां प्रारभेत पुरोदितम् ॥ ७४ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे अग्निकार्यवर्णनं नाम सप्तविंशोऽध्यायः ॥२७॥ ॥ उपमन्युरुवाच ॥ अतः परं प्रवक्ष्यामि शिवाश्रमनिषेविणाम् ॥ शिवशास्त्रोक्तमार्गेण नैमित्तिकविधिक्रमम् ॥१॥ सर्वेष्वपि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





च मासेषु पक्षयोरुभयोरपि ॥ अष्टम्यां च चतुर्दश्यां तथा पर्वणि च क्रमात् ॥ २ ॥ अयने विषुवे चैव ग्रहणेषु विशेषतः ॥ कर्तव्या महती पूजा ह्यधिका वापि शक्तितः ॥३॥ मासिमासि यथान्यायं ब्रह्मकूर्चं प्रसाध्य तु ॥ स्नापयित्वा शिवं तेन पिबेच्छेषमुपोषितः ॥४॥ ब्रह्महत्यादिदोषाणामतीव महतामपि ॥ निष्कृतिर्ब्रह्मकूर्चस्य पानान्नान्या विशिष्यते॥ ५ ॥ पौषे तु पुष्यनक्षत्रे कुर्यान्नीराजनं विभोः ॥ माघे मघाख्ये नक्षत्रे प्रदद्याद् घृतकंबलम् ॥ ॥ ६ ॥ फाल्गुने चोत्तरान्ते वै प्रारंभेत महोत्सवम् ॥ चैत्रे चित्रापौर्णमास्यां दोलां कुर्याद्यथाविधि ॥७॥ वैशाख्यां तु विशाखायां कुर्यात्पुष्पमहालयम् ॥ ज्येष्ठे मूलाख्यनक्षत्रे शीतकुम्भं प्रदापयेत् ॥ ८ ॥ आषाढे चोत्तराषाढे पवित्रारोपणं तथा ॥ श्रावणे प्राकृतान्यापि मण्डलानि प्रकल्पयेत् ॥ ९ ॥ श्रविष्ठाख्ये तु नक्षत्रे प्रौष्ठपद्यां ततः परम् ॥ प्रोक्षयेच्च जलक्रीडां पूर्वाषाढाश्रये दिने ॥१०॥ आश्वयुज्यां ततो दद्यात्पायसं च नवोदनम्॥अग्निकार्यं च तेनैव कुर्याच्छत भिषग्दिने ॥११॥ कार्तिक्यां कृत्तिकायोगे दद्याद्दीपसहस्रकम् ॥ मार्गशीर्षे तथार्द्रायां घृतेन स्नापयेच्छिवम् ॥ १२ ॥ अशक्तस्तेषु कालेषु कुर्यादुत्सवमेव वा ॥ आस्थानं वा महापूजामधिकं वा समर्चनम् ॥ १३ ॥ आवृत्तेऽपि च कल्याणे प्रशस्तेष्वपि कर्मसु ॥ दौर्मनस्ये दुराचारे दुःस्वप्ने दुष्टदर्शने ॥ १४ ॥ उत्पाते वाशुभेन्यस्मिन्रोगे वा प्रबलेऽथ वा ॥ स्नानपूजाजपध्यानहोमदानादिकाः क्रियाः ॥१५॥ निर्मितानुगुणाः कार्य्याः पुरश्चरणपूर्विकाः ॥ शिवानले च विहते पुनस्सन्धानमाचरेत् ॥ १६ ॥ य एवं शर्वधर्मिष्ठो वर्तते नित्यमुद्यतः ॥ तस्यैकजन्मना मुक्तिं प्रयच्छति महेश्वरः॥१७॥एतद्यथोत्तरं कुर्यान्नित्यनैमित्तिकेषु यः ॥ दिव्यं श्रीकंठनाथस्य स्थानमाद्यं स गच्छति ॥ १८ ॥ तत्र भुक्त्वा महाभोगान्कल्पकोटि शतन्नरः ॥ कालांतरेच्युतस्तस्मादौमं कौमारमेव च ॥ १९ ॥ संप्राप्य वैष्णवं ब्राह्मं रुद्रलोकं विशेषतः ॥ तत्रोषित्वा चिरं कालं भुक्त्वा भोगान्यथोदितान् ॥२०॥ पुनश्चोर्ध्वं गतस्तस्मादतीत्य स्थानपञ्चकम् ॥ श्रीकण्ठाज्ज्ञानमासाद्य तस्माच्छैवपुरं व्रजेत् ॥२१॥ अर्द्धचर्य्यारतश्चापि द्विरावृत्त्यैवमेव तु॥पश्चाज्ज्ञानं समासाद्य शिवसायुज्यमाप्नुयात् ॥२२॥ अर्द्धार्द्धचरितो यस्तु देही देहक्षयात्परम् ॥ अंडांतं वोदूर्ध्वमव्यक्तमतीत्य भुवनद्वयम् ॥२३॥ संप्राप्य



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पौरुषं रौद्रस्थानमद्रीन्द्रजापतेः ॥ अनेकयुगसाहस्रं भुक्त्वा भोगाननेकधा ॥ २४ ॥ पुण्यक्षये क्षितिं प्राप्य कुले महति जायते ॥
तत्रापि पूर्वसंस्कारवशेन स महाद्युतिः ॥२५॥ पशुधर्मान्परित्यज्य शिवधर्मरतो भवेत् ॥ तद्धर्मगौरवादेव ध्यात्वा शिवपुरं व्रजेत्
॥ २६ ॥ भोगांश्च विविधान्भुक्त्वा विद्येश्वरपदं व्रजेत् ॥ तत्र विद्येश्वरैस्सार्द्धं भुक्त्वा भोगान्बहून्क्रमात् ॥२७॥ अण्डस्यांतर्बहिर्वाथ
सकृदावर्तते पुनः ॥ ततो लब्ध्वा शिवज्ञानं परां भक्तिमवाप्य च ॥ २८ ॥ शिवसाधर्म्यमासाद्य नभूयो विनिवर्तते ॥ यश्चातीव शिवे
भक्तो विषयासक्तचित्तवत् ॥ २९ ॥ शिवधर्मानसो कुर्वन्नकुर्वन्वापि मुच्यते ॥ एकावृत्तो द्विरावृत्तस्त्रिरावृत्तो निवर्तकः ॥ ३० ॥
न पुनश्चक्रवर्ती स्याच्छिवधर्माधिकारवान् ॥ तस्माच्छिवाश्रितो भूत्वा येन केनापि हेतुना ॥३१॥ शिवधर्मे मतिं कुर्याच्छ्रेयसे चेत्कृ
तोद्यमः ॥ नात्र निर्बंधयिष्यामो वयं केचन केनचित् ॥ ३२ ॥ निर्बन्धेभ्योऽतिवादेभ्यः प्रकृत्यैतन्न रोचते ॥ रोचते वा परेभ्यस्तु
पुण्यसंस्कारगौरवात् ॥३३॥ संसारकारणं येषां न प्ररोढुमलं भवेत् ॥ प्रकृत्यनुगुणं तस्माद्विमृश्यैतदशेषतः ॥३४॥ शिवधर्मेऽधि
कुर्वीतयदीच्छेच्छिवमात्मनः ॥३५॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे नित्यनैमित्तिकविधिवर्णनं नामा
ष्टाविंशोऽध्यायः ॥ २८ ॥ श्रीकृष्ण उवाच ॥ भगवंस्त्वन्मुखादेव श्रुतं श्रुतिसमंमया ॥ स्वाश्रितानां शिवप्रोक्तं नित्यनैमित्तिकं
तथा ॥१॥ इदानीं श्रोतुमिच्छामि शिवधर्माधिकारिणाम् ॥ काम्यमप्यस्ति चेत्कर्म वक्तुमर्हसि साम्प्रतम् ॥२॥ उपमन्युरुवाच ॥
अस्त्यैहिकफलं किञ्चिदामुष्मिकफलं तथा ॥ ऐहिकामुष्मिकञ्चापि तच्च पञ्चविधं पुनः ॥ ३ ॥ किंचित्क्रियामयं कर्म किंचित्कर्म
तपो मयम् ॥ ४ ॥ जपध्यानमयं किंचित्किंचित्सर्वमयं तथा ॥ क्रियामयं तथा भिन्नं होमदानार्चनक्रमात् ॥ ५ ॥ सर्वशक्ति
मतामेव नान्येषां सफलं भवेत् ॥ शक्तिश्चाज्ञा महेशस्य शिवस्य परमात्मनः ॥ ६ ॥ तस्मात्काम्यानि कर्माणि कुर्यादाज्ञा
धरोद्विजः॥अथ वक्ष्यामि काम्यं हि चेहामुत्र फलप्रदम्॥७॥शैवेर्माहेश्वरैश्चैव कार्यमंतर्बहिः क्रमात् ॥ शिवो महेश्वरश्चेति नात्यंत
मिहभिद्यते ॥८॥ यथा तथा न भिद्यंते शैवा माहेश्वरा अपि ॥ शिवाश्रिता हि ते शैवा ज्ञानयज्ञरता नराः ॥९॥ माहेश्वरास्समा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



ख्याता कर्मयज्ञरता भुवि ॥ तस्मादाभ्यन्तरे कुर्युः शैवा माहेश्वरा बहिः ॥ १० ॥ न तु प्रयोगो भिद्येत वक्ष्यमाणस्य कर्मणः॥ परीक्ष्य भूमिं विधिवद्गंधवर्णरसादिभिः ॥ ११ ॥ मनोभिलषिते तत्र वितानविततांबरे ॥ सुप्रलिप्ते महीपृष्ठे दर्पणोदरसंनिभे ॥१२॥ प्राचीमुत्पादयेत्पूर्वं शास्त्रदृष्टेन वर्त्मना ॥ एकहस्तं द्विहस्तं वा मण्डलं परिकल्पयेत् ॥ १३ ॥ आलिखेद्विमलं पद्ममष्टपत्रं सकर्णिकम् ॥ रत्नहेमादिभिश्चूर्णैर्यथासंभवसंभृतैः ॥ १४ ॥ पञ्चावरणसंयुक्तं बहुशोभासमन्वितम् ॥ दलेषु सिद्धयः कल्प्याः केसरेषु सशक्तिकाः ॥ १५ ॥ रुद्रा वामादयस्त्वष्टौ पूर्वादिदलतः क्रमात् ॥ कर्णिकायां च वैराग्यं बीजेषु नव शक्तयः ॥ १६ ॥ स्कन्दे शिवात्मको धर्मो नाले ज्ञानं शिवाश्रयम् ॥ कर्णिकोपरि चाग्नेयं मंडलं सौरमैन्दवम् ॥ १७ ॥ शिवविद्यात्मतत्त्वाख्यं तत्त्वत्रयमतः परम् ॥ सर्वासनोपरि सुखं विचित्रकुसुमान्वितम् ॥ १८ ॥ पंचावरणसंयुक्तं पूजयेदंबया सह ॥ शुद्धस्फटिकसंकाशं प्रसन्नं शीतलद्युतिम् ॥ १९ ॥ विद्युद्वलयसंकाशजटामुकुटभूषितम् ॥ शार्दूलचर्मवसनं किञ्चित्स्मितमुखांबुजम् ॥२०॥ रक्तपद्मदलप्रख्यपादपाणितलाधरम् ॥ सर्वलक्षणसंपन्नं सर्वाभरणभूषितम् ॥ २१ ॥ दिव्यायुधवरैर्युक्तं दिव्यागंधानुलेपनम् ॥ पंचवक्त्रं दशभुजं चन्द्रखण्डशिखामणिम् ॥ २२ ॥ अस्य पूर्वमुखं सौम्यं बालार्कसदृशप्रभम् ॥ त्रिलोचनारविंदाढ्यं कृतबालेंदुशेखरम् ॥२३॥ दक्षिणं नीलजीमूतसमानरुचिरप्रभम् ॥ भ्रुकुटीकुटिलं घोरं रक्तवृत्तेक्षणत्रयम्॥२४॥दंष्ट्राकरालं दुर्द्धर्षं स्फुरिताधरपल्लवम्॥उत्तरं विद्रुमप्रख्यंनीलालकविभूषितम् ॥ २५ ॥ सविलासं त्रिनयनं चन्द्राभरणशेखरम् ॥ पश्चिमं पूर्णचन्द्राभं लोचनत्रितयोज्ज्वलम् ॥२६॥ चन्द्ररेखाधरं सौम्यं मंदस्मितमनोहरम् ॥ पंचमं स्फटिकप्रख्यमिंदुरेखासमुज्ज्वलम् ॥ २७ ॥ अतीव सौम्यमुत्फुल्ललोचनत्रितयोज्ज्वलम् ॥ दक्षिणे शूलपरशुवज्रखड्गानलोज्ज्वलम् ॥ २८ ॥ सव्ये च नागनाराचघण्टापाशांकुशोज्ज्वलम् ॥ निवृत्त्याजानुसंबद्धमानाभेश्च प्रतिष्ठया ॥ २९ ॥ आकंठं विद्यया तद्वदाललाटं तु शांतया ॥ तदूर्द्ध्वं शांत्यतीताख्यकलया परया तथा ॥ ३० ॥ पंचाध्वव्यापिनं साक्षात्कलापंचकविग्रहम् ॥ ईशानमुकुटं देवं पुरुषाख्यं पुरातनम् ॥ ३१ ॥ अघोरहृदयंतद्वद्वामगुह्यं महेश्वरम्॥





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सद्यपादं च तन्मूर्तिमष्टत्रिंशत्कलामयम् ॥ ३२ ॥ मातृकामयमीशानं पंचब्रह्ममयं तथा ॥ ॐकाराख्यमयं चैव हंसशक्त्या समन्वितम् ॥ ३३ ॥ तथेच्छात्मिकया शक्त्या समारूढांकमंडलम् ॥ ज्ञानाख्यया दक्षिणतो वामतश्च क्रियाख्यया ॥ ३४ ॥ तत्त्वत्रय मयं साक्षाद्विद्यामूर्तिं सदाशिवम् ॥ मूर्तिमूलेन संकल्प्य सकलीकृत्य च क्रमात् ॥ ३५ ॥ संपूज्य च यथान्याय मर्घान्तं मूलविद्यया ॥ मूर्तिमन्तं शिवं साक्षाच्छक्त्या परमया सह ॥ ३६ ॥ तत्रावाह्य महादेवं सदसद्व्यक्तिवर्जितम् ॥ पंचोपकरणं कृत्वा पूजयेत्परमेश्वरम् ॥ ३७ ॥ ब्रह्मभिश्च षडङ्गैश्च ततो मातृकया सह ॥ प्रणवेन शिवेनैव शक्तियुक्तेन च क्रमात् ॥३८॥ शांतेन वा तथान्यैश्च वेदमन्त्रैश्च कृत्स्नशः ॥ पूजयेत्परमं देवं केवलेन शिवेन वा ॥३९॥ पाद्यादिमुखवासांतं कृत्वा प्रस्थापनं विना ॥ पंचावरणपूजां तु ह्यारभेत यथाक्रमम् ॥ ४० ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे काम्यकर्मवर्णनं नामैकोनत्रिंशत्तमोऽध्यायः ॥२९॥ तत्रादौ शिवयोः पार्श्वे दक्षिणे वामतः क्रमात् ॥ गंधाद्यैरर्चयेत्पूर्वं देवौ हेरंबषण्मुखौ ॥ १ ॥ ततो ब्रह्माणि परित ईशानादि यथाक्रमम् ॥ सशक्तिकानि सद्यांतं प्रथमावरणे यजेत् ॥ २ ॥ षडंगान्यपि तत्रैव हृदयादीन्यनुक्रमात् ॥ शिवस्य च शिवायाश्च वाह्नेयादि समर्चयेत् ॥३॥ तत्र वामादिकान्रुद्रानष्टौ वामादिशक्तिभिः ॥ अर्चयेद्वा न वा पश्चात्पूर्वादिपरितः क्रमात् ॥ ४ ॥ प्रथमावरणं प्रोक्तं मया ते यदुनंदन ॥ द्वितीयावरणं प्रीत्या प्रोच्यते श्रद्धया शृणु ॥ ५ ॥ अनंतं पूर्वदिक्पत्रे तच्छक्तिं तस्य वामतः ॥ सूक्ष्मं दक्षिणदिक्पत्रे सह शक्त्या समर्चयेत् ॥६॥ ततः पश्चिमदिक्पत्रे सह शक्त्या शिवोत्तमम् ॥ तथैवोत्तरदिक्पत्रे चैकनेत्रं समर्चयेत्॥७॥एकरुद्रं च तच्छक्तिं पश्चादीशदलेर्चयेत्॥त्रिमूर्तिं तस्य शक्तिं च पूजयेदग्निदिग्दले ॥८॥ श्रीकण्ठं नैर्ऋते पत्रे तच्छक्तिं तस्य वामतः ॥ तथैव मारुते पत्रे शिखंडीशं समर्चयेत् ॥ ९ ॥ द्वितीयावरणे चेज्यास्संवंतश्चक्रवर्त्तिनः ॥ तृतीयावरणे पूज्याः शक्तिभिश्चाष्टमूर्तयः ॥१०॥ अष्टसु क्रमशो दिक्षु पूर्वादिपरितः क्रमात् ॥ भवः शर्वस्तथेशानो रुद्रः पशुपतिस्ततः ॥११॥ उग्रो भीमो महादेव इत्यष्टौ मूर्तयः क्रमात ॥ अनंतरं ततश्चैव महादेवादयः क्रमात् ॥ शक्तिभिस्सह



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



संपूज्यास्तत्रैकादशमूर्तयः ॥१२॥ महादेवः शिवो रुद्रः शंकरो नीललोहितः ॥ ईशानो विजयो भीमो देवदेवो भवोद्भवः ॥१३॥ कपर्दीशश्च कथ्यंते तथैकादशशक्तयः॥तत्राष्टौ प्रथमं पूज्याः वाह्नेयादि यथाक्रमम्॥१४॥देवदेवः पूर्वपत्रे ईशानं चाग्निगोचरे॥भवोद्भवस्तयोर्मध्ये कपालीशस्ततः परम् ॥ १५ ॥ तस्मिन्नावरणे भूयो वृषेन्द्रं पुरतो यजेत् ॥ नंदिनं दक्षिणे तस्य महाकालं तथोत्तरे ॥ १६ ॥ शास्तारं वह्निदिक्पत्रे मातॄर्दक्षिणदिग्दले ॥ गजास्यं नैर्ऋते पत्रे षण्मुखं वारुणे पुनः ॥ १७ ॥ ज्येष्ठां वायुदले गौरीमुत्तरे चंडमेश्वरे ॥ शास्तृनन्दीशयोर्मध्ये मुनीन्द्रं वृषभं यजेत् ॥ १८ ॥ महाकालस्योत्तरतः पिंगलं तु समर्चयेत् ॥ शास्तृमातृसमूहस्य मध्ये भृंगीश्वरं ततः ॥ १९ ॥ मातृविघ्नेशमध्ये तु वीरभद्रं समर्चयेत् ॥ स्कन्दविघ्नेशयोर्मध्ये यजेद्देवीं सरस्वतीम् ॥ २० ॥ ज्येष्ठाकुमारयोर्मध्ये श्रियं शिवपदार्च्चिताम्॥ज्येष्ठागणाम्बयोर्मध्ये महामोटीं समर्चयेत्॥२१॥गणाम्बाचण्डयोर्मध्ये देवीं दुर्गां प्रपूजयेत् ॥ अत्रैवावरणे भूयः शिवानुचरसंहतिम् ॥ २२ ॥ रुद्रप्रथमभूताख्यां विविधां च सशक्तिकाम् ॥ शिवायाश्च सखीवर्गं जपेद्ध्यात्वा समाहितः ॥ २३ ॥ एवं तृतीयावरणे वितते पूजिते सति ॥ चतुर्थावरणं ध्यात्वा बहिस्तस्य समर्चयेत् ॥ २४ ॥ भानुः पूर्वदले पूज्यो दक्षिणे चतुराननः ॥ रुद्रो वरुणदिक्पत्रे विष्णुरुत्तरदिग्दले ॥ २५ ॥ चतुर्णामपि देवानां पृथगावरणान्यथ ॥ तस्यांगानि षडेवादौ दीप्ताद्याभिश्च शक्तिभिः ॥ २६ ॥ दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला क्रमात् ॥ अमोघा विद्युता चैव पूर्वादि परितः स्थिताः ॥२७॥ द्वितीयावरणे पूज्याश्चतस्रो मूर्तयः क्रमात् ॥ पूर्वाद्युत्तरपर्यंताः शक्तयश्च ततः परम्॥२८॥आदित्यो भास्करोभानू रविश्चेत्यनुपूर्वशः ॥ अर्को ब्रह्मा तथा रुद्रो विष्णुश्चैते विवस्वतः ॥ २९ ॥ विस्तारा पूर्वदिग्भागे सुतरां दक्षिणे स्थिताः ॥ बोधनी पश्चिमे भागे आप्यायिन्युत्तरे पुनः ॥ ३० ॥ उषां प्रभां तथा प्राज्ञां सन्ध्यामपि ततः परम् ॥ ऐशानादिषु विन्यस्य द्वितीयावरणे यजेत् ॥ ३१ ॥ सोममंगारकं चैव बुधं बुद्धिमतां वरम् ॥ बृहस्पतिं बृहद्बुद्धिं भार्गवं तेजसां निधिम् ॥ ३२ ॥ शनैश्चरं तथा राहुं केतुं धूम्रं भयंकरम् ॥ समंततो यजेदेतांस्तृतीयावरणे क्रमात् ॥ ३३ ॥ अथवा द्वादशादित्या द्वितीया वरणे



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

यजेत् ॥ तृतीयावरणे चैव राशीन्द्वादश पूजयेत् ॥ ३४ ॥ सप्तसप्त गणांश्चैव बहिस्तस्य समंततः ॥ ऋषीन्देवांश्च गंधर्वान्पन्नगानप्सरोगणान् ॥ ३५ ॥ ग्रामण्यश्च तथा यक्षान्यातुधानांस्तथा हयान् ॥ सप्तच्छंदोमयांश्चैववालखिल्यांश्च पूजयेत् ॥३६॥ एवं तृतीयावरणे समभ्यर्च्य दिवाकरम् ॥ ब्रह्माणमर्चयेत्पश्चात्त्रिभिरावरणैः सहः ॥ ३७ ॥ हिरण्यगर्भं पूर्वस्यां विराजं दक्षिणे ततः॥ कालं पश्चिमदिग्भागे पुरुषं चोत्तरे यजेत् ॥३८॥ हिरण्यगर्भः प्रथमो ब्रह्मा कमलसन्निभः ॥ कालो जात्यंजनप्रख्यः पुरुषः स्फटिकोपमः ॥३९॥ त्रिगुणो राजसश्चैव तामसः सात्त्विकस्तथा ॥ चत्वार एते क्रमशः प्रथमावरणे स्थिताः ॥ ४० ॥ द्वितीयावरणे पूज्याः पूर्वादिपरितः क्रमात् ॥ सनत्कुमारः सनकः सनंदश्च सनातनः ॥४१॥ तृतीयावरणे पश्चादर्चयेच्च प्रजापतीन् ॥ अष्टौ पूर्वांश्च पूर्वादौ त्रीन्प्राक्पश्चादनुक्रमात् ॥४२॥ दक्षो रुचिर्भृगुश्चैव मरीचिश्च तथांगिराः ॥ पुलस्त्य पुलहश्चैव क्रतुरत्रिश्च कश्यपः ॥४३॥ वसिष्ठश्चेति विख्याताः प्रजानां पतयस्त्विमे ॥ तेषां भार्य्यांश्च तैस्सार्द्धं पूजनीया यथाक्रमम्॥४४॥प्रसूतिश्च तथाऽऽकूतिः ख्यातिः सम्भूतिरेव च ॥ धृतिः स्मृतिः क्षमा चैव सन्नतिश्चानसूयका॥४५॥देवमातारुन्धती च सर्वाः खलु पतिव्रताः ॥ शिवार्चनरतो नित्यं श्रीमत्यः प्रियदर्शनाः ॥ ४६ ॥ प्रथमावरणे वेदांश्चतुरो वा प्रपूजयेत् ॥ इतिहासपुराणानि द्वितीयावरणे पुनः ॥ ४७ ॥ तृतीयावरणे पश्चाद्धर्मशास्त्रपुरस्सराः ॥ वैदिक्यो निखिला विद्याः पूज्या एव समंततः ॥४८॥ पूर्वादिपुरतो वेदास्तदन्ये तु यथारुचि ॥ अष्टधा वा चतुर्धा वा कृत्वा पूजां समं ततः ॥४९॥ एवं ब्रह्माणमभ्यर्च्य त्रिभिरावरणैर्युतम् ॥ दक्षिणे पश्चिमे पश्चाद्रुद्रं सावरणं यजेत् ॥५०॥ तस्य ब्रह्मषडंगानि प्रथमावरणं स्मृतम् ॥ द्वितीयावरणे चैव विद्येश्वरमयं तथा ॥५१॥ तृतीयावरणे भेदो विद्यते स तु कथ्यते ॥ चतस्रो मूर्तयस्तस्य पूज्याः पूर्वादितः क्रमात ॥५२॥ त्रिगुणास्सकलो देवः पुरस्ताच्छिवसंज्ञकः ॥ राजसो दक्षिणे ब्रह्मा सृष्टिकृत्पूज्यते भवः ॥ ५३ ॥ तामसः पश्चिमे चाग्निः पूज्यस्संहारको हरः ॥ सात्त्विकस्सुखकृत्सौम्ये विष्णुर्विश्वपतिर्मृडः ॥ ॥५४॥एवं पश्चिमदिग्भागे शम्भोः षड्विंशकं शिवम् ॥ समभ्यर्च्योत्तरे पार्श्वे ततो वैकुंठमर्चयेत्॥५५॥वासुदेवं पुरस्कृत्वा प्रथमा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





वरणे यजेत् ॥ अनिरुद्धं दक्षिणतः प्रद्युम्नं पश्चिमे ततः ॥ ५६ ॥ सौम्ये संकर्षणं पश्चाद्व्यत्यस्तौ वा यजेदिमौ ॥ प्रथमावरणं प्रोक्तं द्वितीयावरणं शुभम् ॥ ५७ ॥ मत्स्यः कूर्मो वराहश्च नरसिंहोथ वामनः ॥ रामश्चान्यतमः कृष्णो भवानश्वमुखोपि च ॥५८॥ तृतीयावरणे चक्रः पूर्वभागे समर्चयेत् ॥ नारायणाख्यं याम्येस्त्रं क्वचिदव्याहतं यजेत् ॥५९॥ पश्चिमे पांचजन्यं च शार्ङ्गं धनुरथोत्तरे ॥ एवं त्र्यावरणैः साक्षाद्विश्वाख्यं परमं हरिम् ॥६०॥ महाविष्णुं सदाविष्णुं मूर्त्तीकृत्य समर्चयेत् ॥ इत्थं विष्णोश्चतुर्व्यूहक्रमान्मूर्तिचतुष्टयम्॥पूजयित्वा च तच्छक्तीश्चतस्रः पूजयेत्क्रमात्॥६१॥प्रभामाग्नेयदिग्भागे नैर्ऋते तु सरस्वतीम् ॥ गणांबिका च वायव्ये लक्ष्मीं रौद्रे समर्चयेत् ॥ ६२ ॥ एवं भान्वादिमूर्त्तीनां तच्छक्तीनामनंतरम् ॥ पूजां विधाय लोकेशांस्तत्रैवावरणे यजेत् ॥ ६३ ॥ इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा ॥ वायुं सोमं कुबेरं च पश्चादीशानमर्चयेत् ॥६४॥ एवं चतुर्थावरणं पूजयित्वा विधानतः ॥ आयुधानि महेशस्य पश्चाद्बाह्यं समर्चयेत् ॥ ६५ ॥ श्रीमत्त्रिशूलमैशाने वज्रं माहेन्द्रदिङ्मुखे ॥ परशुं वह्निदिग्भागे याम्ये सायकमर्चयेत् ॥ ६६ ॥ नैर्ऋते तु यजेत्खड्गं पाशं वारुणगोचरे ॥ अंकुशं मारुते भागे पिनाकं चोत्तरे यजेत् ॥ ६७ ॥ पश्चिमाभिमुखं रौद्रं क्षेत्रपालं समर्चयेत् ॥ पञ्चमावरणं चैव सम्पूज्यानन्तरं बहिः ॥६८॥ सर्वावरणदेवानां बहिर्वा पञ्चमेऽथवा ॥ पञ्चमे मातृभिस्सार्द्धं महोक्ष पुरतो यजेत् ॥ ६९ ॥ ततः समंततः पूज्यास्सर्वा वै देवयोनयः ॥ खेचरा ऋषयस्सिद्धा दैत्या यक्षाश्च राक्षसाः ॥ ७० ॥ अनंताद्याश्च नागेंद्रा नागैस्तत्तत्कुलोद्भवैः ॥ डाकिनीभूतवेतालप्रेतभैरवनायकाः ॥ ७१ ॥ पातालवासिनश्चान्ये नानायोनिसमुद्भवाः ॥ नद्यस्ससमुद्रा गिरयः काननानि सरांसि च ॥ ७२ ॥ पशवः पक्षिणो वृक्षाः कीटाद्याः क्षुद्रयोनयः ॥ नराश्च विविधाकारा मृगाश्च क्षुद्रयोनयः ॥ ७३ ॥ भुवनान्यन्तरण्डस्य ततो ब्रह्माण्डकोटयः ॥ बहिरंडान्यसंख्यानि भुवनानि सहाधिपैः ॥ ॥७४॥ ब्रह्मांडाधारका रुद्रा दशदिक्षु व्यवस्थिताः ॥ यद्गौड यच्च मामेयं यद्वा शाक्तं ततः परम् ॥ ॥७५॥ यत्किञ्चिदस्ति शब्दस्य वाच्यं चिदचिदात्मकम्॥तत्सर्वं शिवयोः पार्श्वे बुद्ध्वा सामान्यतो यजेत्॥७६॥ कृतांजलिपुटाः सर्वेऽचिंत्याः स्मितमुखास्तथा॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

प्रीत्या संप्रेक्षमाणाश्च देवं देवीं च सर्वदा॥७७॥इत्थमावरणाभ्यर्चां कृत्वाविक्षेपशांतये॥पुनरभ्यर्च्यदेवेशंपञ्चाक्षरमुदीरयेत्॥७८॥निवेद
येत्ततः पश्चाच्छिवयोरमृतोपमम्॥सुव्यञ्जनसमायुक्तं शुद्धं चारु महाचरुम्॥७९॥द्वात्रिंशदाढकैर्मुख्यमधमं त्वाढकावरम्॥साधयित्वा
यथासंपच्छ्रद्धया विनिवेदयेत्॥८०॥ततो निवेद्य पानीयं तांबूलं चोपदंशकैः॥नीराजनादिकं कृत्वा पूजाशेषं समापयेत्॥८१॥भोगोप
योग्यद्रव्याणि विशिष्टान्येव साधयेत्॥वित्तशाठ्यं न कुर्वीत भक्तिमान्विभवे सति॥८२॥शठस्योपेक्षकस्यापि व्यंगं चैवानुतिष्ठतः॥न
फलंत्येव कर्माणि काम्यानीति सतां कथा॥८३॥तस्मात्सम्यगुपेक्षां च त्यक्त्वा सर्वांगयोगतः॥ कुर्यात्काम्यानि कर्माणि फलसिद्धिं
यदीच्छति ॥८४॥ इत्थं पूजां समाप्याथ देवं देवीं प्रणम्य च ॥ भक्त्या मनस्समाधाय पश्चात्स्तोत्रमुदीरयेत् ॥८५॥ ततः स्तोत्रमुपा
स्यान्ते त्वष्टोत्तरशतावराम् ॥ जपेत्पञ्चाक्षरीं विद्यां सहस्रोत्तरमुत्सुकः॥८६॥विद्यापूजां गुरोः पूजां कृत्वा पश्चाद्यथाक्रमम्॥यथोदयं
यथाश्राद्धं सदस्यानपि पूजयेत् ॥ ८७ ॥ ततः उद्वास्य देवेशं सर्वैरावरणैः सह ॥ मण्डलं गुरवे दद्याद्यागोपकरणैस्सह ॥ ८८ ॥
शिवाश्रितेभ्यो वा दद्यात्सर्वमेवानुपूर्वशः ॥ अथवा तच्छिवायैव शिवक्षेत्रे समर्पयेत् ॥८९॥ शिवाग्नौ वा यजेद्देवं होमद्रव्यैश्च सप्त
भिः ॥ समभ्यर्च्य यथान्यायं सर्वावरणदेवताः ॥ ९० ॥ एष योगेश्वरो नाम त्रिषु लोकेषु विश्रुतः ॥ न तस्मादधिकः कश्चिद्यागोऽ
स्ति भुवने क्वचित् ॥ ९१ ॥ न तदस्ति जगत्यस्मिन्नसाध्यं यदनेन तु ॥ ऐहिकं वा फलं किंचिदामुष्मिकफलं तु वा ॥ ९२ ॥ इद
मस्य फलं नेदमिति नैव नियम्यते ॥ श्रेयोरूपस्य कृत्स्नस्य तदितं श्रेष्ठसाधनम् ॥ ९३ ॥ इदं न शक्यते वक्तुं पुरुषेण यदर्च्यते ॥
चिंतामणेरिवैतस्मात्तत्तेन प्राप्यते फलम् ॥ ९४ ॥ तथापि क्षुद्रमुद्दिश्य फलं नैतत्प्रयोजयेत् ॥ लघ्वर्थी महतो यस्मात्स्वयं लघु
तरो भवेत् ॥९५॥ महद्वा फलमल्पं वा कृतं चेत्कर्म सिध्यति ॥ महादेवं समुद्दिश्य कृतं कर्म प्रयुज्यताम् ॥ ९६ ॥ तस्मादनन्यल
भ्येषु शत्रुमृत्युंजयादिषु ॥ फलेषु दृष्टादृष्टेषु कुर्यादेतद्विचक्षणः ॥ ९७ ॥ महत्स्वपि च पातेषु महारोगभयादिषु ॥ दुर्भिक्षादिषु
शांत्यर्थं शांतिं कुर्यादनेन तु ॥९८॥ बहुना किं प्रलापेन महाव्यापन्निवारकम् ॥ आत्मीयमस्त्रं शैवानामिदमाह महेश्वरः ॥ ९९ ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





तस्मादितः परं नास्ति परित्राणमिहात्मनः ॥ इति मत्वा प्रयुंजानः कर्मेदं शुभमश्नुते॥१००॥स्तोत्रमात्रं शुचिर्भूत्वा यःपठेत्सुसमाहितः ॥ सोप्यभीष्टतमादर्थादष्टांशफलमाप्नुयात्॥१०१॥अर्थं तस्यानुसन्धाय पर्वण्यनशनःपठेत्॥अष्टम्यां वा चतुर्दश्यां फलमर्द्धं समाप्नुयात् ॥ १०२ ॥ यस्त्वर्थमनुसंधाय पर्वादिषु तथा व्रती ॥ मासमेकं जपेत्स्तोत्रं स कृत्स्नं फलमाप्नुयात् ॥ १०३ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शैवानां काम्यकवर्णनं नाम त्रिंशोऽध्यायः ॥ ३० ॥ उपमन्युरुवाच ॥ स्तोत्रं वक्ष्यामि ते कृष्ण पंचावरणमार्गतः ॥ योगेश्वरमिदं पुण्यं कर्म येन समाप्यते ॥१॥ जयजय जगदेकनाथ शंभो प्रकृतिमनोहर नित्यचित्स्वभाव ॥ अतिगतकलुषप्रपञ्चवाचामपि मनसां पदवीमतीततत्त्वम् ॥ २ ॥ स्वभावनिर्मलाभोग जय सुन्दरचेष्टित ॥ स्वात्मतुल्यमहाशक्ते जय शुद्धगुणार्णव ॥ ३ ॥ अनन्तकांतिसंपन्न जयासदृशविग्रह ॥ अतर्क्यमहिमाधार जयानाकुलमंगल ॥ ४ ॥ निरंजन निराधार जय निष्कारणोदय ॥ निरन्तरपरानन्द जय निर्वृतिकारण ॥ ५ ॥ जयातिपरमैश्वर्य जयातिकरुणास्पद ॥ जय स्वतंत्रसर्वस्व जयासदृशवैभव ॥ ६ ॥ जयावृतमहाविश्व जयानावृत केनचित् ॥ जयोत्तर समस्तस्य जयात्यन्तनिरुत्तर ॥ ७ ॥ जयाद्भुत जयाक्षुद्र जयाक्षत जयाव्यय ॥ जयामेय जयामाय जयाभाव जयामल ॥ ८ ॥ महाभुज महासार महागुण महाकथ ॥ महाबल महामाय महारस महारथ ॥ ९ ॥ नमः परमदेवाय नमः परमहेतवे ॥ नमश्शिवाय शांताय नमश्शिवतराय ते ॥ १० ॥ त्वदधीनमिदं कृत्स्नं जगद्धि ससुरासुरम् ॥ ११ ॥ अतस्त्वद्विहितामाज्ञां क्षमते कोऽतिवर्तितुम् ॥ १२ ॥ अयं पुनर्जनो नित्यं भवदेकसमाश्रयः ॥ भवानतोऽनुगृह्यास्मै प्रार्थितं संप्रयच्छतु ॥ १३ ॥ जयांबिके जगन्मातर्जय सर्वजगन्मयि ॥ जयानवधिकैश्वर्ये जयानुपमविग्रहे॥१४॥जय वाङ्मनसातीते जयाचिद्ध्वांतभंजिके ॥ जय जन्मजराहीने जय कालोत्तरोत्तरे॥१५॥जयानेकविधानस्थे जय विश्वेश्वरप्रिये ॥ जय विश्वसुराराध्ये जय विश्वविजृंभिणि ॥ १६ ॥ जय मंगलदिव्यांगि जय मंगलदीपिके ॥ जय मंगलचारित्रे जय मंगलदायिनि ॥ १७ ॥ नमः परमकल्याणगुणसंचयमूर्तये ॥ त्वत्तः खलु समुत्पन्नं जगत्त्वय्येव लीयते ॥ १८ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

त्वद्विनातः फलं दातुमीश्वरोपि न शक्नुयात् ॥ जन्मप्रभृति देवेशि जनोयं त्वदुपाश्रितः ॥१९॥ अतोऽस्य तव भक्तस्य निर्वर्तय मनोरथम् ॥ पंचवक्त्रो दशभुजः शुद्धस्फटिकसन्निभः ॥२०॥ वर्णब्रह्मकलादेहो देवस्सकलनिष्कलः ॥ शिवभक्तिसमारूढः शांत्यतीतस्सदाशिवः ॥ भक्त्या मयार्चितो मह्यं प्रार्थितं शं प्रयच्छतु ॥ २१ ॥ सदाशिवांकमारूढा शक्तिरिच्छा शिवाह्वया ॥ जननी सर्वलोकानां प्रयच्छतु मनोरथम् ॥२२॥ शिवयोर्दयिता पुत्रौ देवौ हेरंबषण्मुखौ ॥ शिवानुभावौ सर्वज्ञौ शिवज्ञानामृताशिनौ॥२३॥ तृप्तौ परस्परं स्निग्धौ शिवाभ्यां नित्यसत्कृतौ ॥ सत्कृतौ च सदा देवौ ब्रह्माद्यैस्त्रिदशैरपि ॥२४॥ सर्वलोकपरित्राणं कर्तुमभ्युदितौ सदा ॥ स्वेच्छातारं कुर्वंतौ स्वांशभेदैरनेकशः ॥२५॥ ताविमौ शिवयोः पार्श्वे नित्यमित्थं मयार्चितौ॥तयोराज्ञां पुरस्कृत्य प्रार्थितं मे प्रयच्छताम् ॥२६॥ शुद्धस्फटिकसंकाशमीशानाख्यं सदाशिवम् ॥ मूर्द्धाभिमानिनी मूर्तिः शिवस्य परमात्मनः ॥२७ ॥ शिवार्चनरतं शांतं शांत्यतीतं मखास्थितम् ॥ पंचाक्षरांतिमं बीजं कलाभिः पंचभिर्युतम् ॥ २८ ॥ प्रथमावरणे पूर्वं शक्त्या सह समार्चितम्॥ पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु ॥ २९ ॥ बालसूर्यप्रतीकाशं पुरुषाख्यं पुरातनम् ॥ पूर्ववक्त्राभिमानं च शिवस्य परमेष्ठिनः॥ ॥३०॥ शांत्यात्मकं मरुत्संस्थं शम्भोः पादार्चने रतम् ॥ प्रथमं शिवबीजेषु कलासु च चतुष्कलम् ॥३१॥ पूर्वभागे मया भक्त्या शक्त्या सह समर्चितम् ॥ पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु ॥ ३२ ॥ अञ्जनादिप्रतीकाशमघोरं घोरविग्रहम् ॥ देवस्य दक्षिणं वक्त्रं देवदेवपदार्चकम् ॥ ३३ ॥ विद्यापादं समारूढं वह्निमण्डलमध्यगम् ॥ द्वितीयं शिवबीजेषु कलास्वष्टकलान्वितम् ॥ ३४ ॥ शंभोर्दक्षिणदिग्भागे शक्त्या सह समर्चितम् ॥ पवित्रं मध्यमं ब्रह्म प्रार्थितं मे प्रयच्छतु ॥३५॥ कुंकुमक्षोदसंकाशं वामाख्यं वरवेषधृक् ॥ वक्त्रमुत्तरमीशस्य प्रतिष्ठायां प्रतिष्ठितम् ॥३६॥ वारिमंडलमध्यस्थं महादेवार्चने रतम् ॥ तुरीयं शिवबीजेषु त्रयोदशकलान्वितम् ॥३७॥ देवस्योत्तरदिग्भागे शक्त्या सह समर्चितम् ॥ पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु ॥ ३८ ॥ शंखकुंदेंदुधवलं संध्याख्यं सौम्यलक्षणम् ॥ शिवस्य पश्चिमं वक्त्रं शिवपादार्चने रतम् ॥ ३९ ॥ निवृत्तिपदनिष्ठं च पृथिव्यां समवस्थितम्॥तृतीयं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





शिवबीजेषु कलाभिश्चाष्टभिर्युतम्॥४०॥देवस्य पश्चिमे भागे शक्त्या सह समर्चितम्॥पवित्रं परमं ब्रह्म प्रार्थितं मे प्रयच्छतु॥४१॥ शिवस्य तु शिवायाश्च हृन्मूर्तिशिवभाविते॥तयोराज्ञां पुरस्कृत्य ते मे कामं प्रयच्छताम्॥४२॥शिवस्य च शिवायाश्च शिखामूर्तिशिमाश्रिते॥सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम्॥४३॥शिवस्य च शिवायाश्च वर्मणा शिवभाविते॥ सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् ॥ ४४ ॥ शिवस्य च शिवायाश्च नेत्रमूर्तिशिवाश्रिते ॥ सत्कृत्य शिवयोराज्ञां ते मे कामं प्रयच्छताम् ॥ ४५ ॥ अस्त्रमूर्ती च शिवयोर्नित्यमर्चनतत्परे ॥ सत्कृत्य शिवयोराज्ञां तेमे कामं प्रयच्छताम् ॥ ४६ ॥ वामौ ज्येष्ठस्तथा रुद्रः कालो विकरणस्तथा ॥ बलो विकरणश्चैव बलप्रमथनः परः ॥४७॥ सर्वभूतस्य दमनस्तादृशाश्चाष्टशक्तयः ॥ प्रार्थितं मे प्रयच्छंतु शिवयोरेव शासनात् ॥ ४८ ॥ अथानंतश्च सूक्ष्मश्च शिवश्चाप्येकनेत्रकः ॥ एक रुद्राख्यमूर्तिश्च श्रीकण्ठश्च शिखंडकः ॥४९॥ तथाष्टौ शक्तयस्तेषां द्वितीयावरणेऽर्चिताः ॥ ते मे कामं प्रयच्छंतु शिवयोरेव शासनात् ॥ ५० ॥ भवाद्या मूर्तयश्चाष्टौ तासामपि च शक्तयः॥महदेवादयश्चान्येतथैकादशमूर्तयः ॥५१॥ शक्तिभिस्सहितास्सर्वे तृतीयावरणे स्थिताः॥सत्कृत्य शिवयोराज्ञां दिशंतु फलमीप्सितम्॥ ॥ ५२ ॥ वृक्षराजो महातेजा महामेघसमस्वनः ॥ मेरुमंदरकैलासहिमाद्रिशिखरोपमः ॥५३॥ सिताभ्रशिखराकार ककुदा परिशोभितः ॥ महाभोगींद्रकल्पेन वालेन च विराजितः ॥ ५४ ॥ रक्तास्यशृंगचरणौ रक्तप्रायविलोचनः ॥ पीवरोन्नतसर्वांगस्सुचारुगमनोज्ज्वलः ॥ ५५ ॥ प्रशस्तलक्षणः श्रीमान्प्रज्वलन्मणिभूषणः ॥ शिवप्रियः शिवासक्तः शिवयोर्ध्वजवाहनः ॥ ५६ ॥ तथा तच्चरणन्यासपावितापरविग्रहः ॥ गोराजपुरुषः श्रीमाञ्छ्रीमच्छूलवरायुधः॥तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु॥५७॥ नन्दीश्वरो महातेजा नगेन्द्रतनयात्मजः ॥ सनारायणकैर्देवैर्नित्यमभ्यर्च्य वंदितः ॥५८॥ शर्वस्यांतःपुरद्वारि सार्द्धं परिजनैः स्थितः सर्वेश्वरसमप्रख्यस्सर्वासुरविमर्दनः॥५९॥ सर्वेषां शिवधर्माणामध्यक्षत्वेऽभिषेचितः ॥ शिवप्रियश्शिवासक्तश्श्रीमच्छूलवरायुधः ॥ ॥ ६० ॥ शिवाश्रितेषु संसक्तस्त्वनुरक्तश्च तैरपि ॥ सत्कृत्य शिवयोराज्ञां स मे कामं प्रयच्छतु ॥६१॥ महाकालो महाबाहुर्महादेव



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

इवापरः ॥ महादेवाश्रितानां तु नित्यमेवाभिरक्षतु ॥६२॥ शिवप्रियः शिवासक्तश्शिवयोरर्चकस्सदा॥सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम्॥६३॥सर्वशास्त्रार्थतत्त्वज्ञः शास्ता विष्णोः परा तनुः॥महामोहात्मतनयो मधुमांसासवप्रियः॥तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु ॥ ६४ ॥ ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ॥ वाराही चैव माहेंद्री चामुंडा चंडविक्रमा ॥६५॥ एता वै मातरः सप्त सर्वलोकस्य मातरः ॥ प्रार्थितं मे प्रयच्छंतु परमेश्वरशासनात् ॥६६॥ मत्तमातंगवदनो गंगोमाशंकरात्मजः॥ अकाशदेहो दिग्बाहुस्सोमसूर्याग्निलोचनः॥६७॥ऐरावतादिभिर्दिव्यैर्दिग्गजैर्नित्यमर्चितः॥शिवज्ञानमदोद्भिन्नस्त्रिदशानामविघ्नकृत्॥ ॥ ६८ ॥ विघ्नकृच्चासुरादीनां विघ्नेशः शिवभावितः॥सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् ॥६९॥ षण्मुखश्शिवसम्भूतः शक्तिवज्रधरः प्रभुः ॥ अग्नेश्च तनयो देवो ह्यपर्णातनयः पुनः ॥७०॥ गंगायाश्च गणांबायाः कृत्तिकानां तथैव च॥विशाखेन च शाखेन नैगमेयेन चावृतः ॥ ७१ ॥ इंद्रजिच्चंद्रसेनानीस्तारकासुरजित्तथा ॥ शैलानां मेरुमुख्यानां वेधकश्च स्वतेजसा ॥ ७२ ॥ तप्तचामीकरप्रख्यः शतपत्रदलेक्षणः ॥ कुमारस्सुकुमाराणां रूपोदाहरणं महत् ॥७३॥ शिवप्रियः शिवासक्तः शिवपदार्चकस्सदा॥ सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् ॥७४॥ ज्येष्ठा वरिष्ठा वरदा शिवयोर्यजनेरता॥तयोराज्ञां पुरस्कृत्य सा मे दिशतु कांक्षितम् ॥ ७५ ॥ त्रैलोक्यवंदिता साक्षादुल्काकारा गणांबिका ॥ जगत्सृष्टिविवृद्ध्यर्थं ब्रह्मणाऽभ्यर्थिता शिवात् ॥ ७६ ॥ शिवायाः प्रविभक्ताया भ्रुवोरन्तरनिस्सृताः ॥ दाक्षायणी सती मेना तथा हैमवती ह्युमा ॥७७॥ कौशिक्याश्चैव जननी भद्रकाल्यास्तथैव च ॥ अपर्णायाश्च जननी पाटलायास्तथैव च ॥७८॥ शिवार्चनरता नित्यं रुद्राणी रुद्रवल्लभा॥सत्कृत्य शिवयोराज्ञां सा मे दिशतु कांक्षितम् ॥ ७९ ॥ चंडः सर्वगणेशानः शंभोर्वदनसंभवः ॥ सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् ॥ ८० ॥ पिंगलो गणपः श्रीमाञ्छिवासक्तः शिवप्रियः ॥ आज्ञया शिवयोरेव स मे कामं प्रयच्छतु ॥८१॥ भृंगीशो नाम गणपः शिवराधनतत्परः ॥

१ सम्बन्धसामान्यविवक्षया कर्मणि षष्ठी ।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





प्रयच्छतु स मे कामं पत्युराज्ञापुरःसरम् ॥८२॥ वीरभद्रो महातेजा हिमकुंदेंदुसन्निभः ॥ भद्रकालीप्रियो नित्यं मातॄणां चाभिरक्षिता॥८३॥यज्ञस्य च शिरोहर्ता दक्षस्य च दुरात्मनः॥उपेंद्रेंद्रयमादीनां देवानामंगतक्षकः॥८४॥शिवस्यानुचरः श्रीमाञ्छिवशासनपालकः ॥ शिवयोः शासनादेव स मे दिशतु कांक्षितम् ॥८५॥ सरस्वती महेशस्य वाक्सरोजसमुद्भवा ॥ शिवयोः पूजने सक्ता स मे दिशतु कांक्षितम् ॥ ८६ ॥ विष्णोर्वक्षः स्थिता लक्ष्मीः शिवयोः पूजने रता ॥ शिवयोः शासनादेव सा मे दिशतु कांक्षितम्॥८७॥ महामोटी महादेव्याः पादपूजापरायणा ॥ तस्य एव नियोगेन सा मे दिशतु कांक्षितम् ॥ ८८ कौशिकी सिंहमारूढा पार्वत्याः परमा सुता ॥ विष्णोर्निद्रामहामाया महामहिषमर्दिनी ॥८९॥ निशुंभशुंभसंहत्री मधुमांसासवप्रिया ॥ सत्कृत्य शासनं मातुस्सा मे दिशतु कांक्षितम् ॥९०॥ रुद्रा रुद्रसमप्रख्याः प्रथमाः प्रथितौजसः ॥ भूताख्याश्च महावीर्या महादेवसमप्रभाः ॥९१॥ नित्यमुक्ता निरुपमा निर्द्वन्द्वा निरुपप्लवाः ॥ सशक्तयस्सानुचरास्सर्वलोकनमस्कृताः ॥९२॥ सर्वेषामेव लोकानां सृष्टिसंहरणक्षमाः ॥ परस्परानुरक्ताश्च परस्परमनुव्रताः ॥ ९३ ॥परस्परमतिस्निग्धाः परस्परनमस्कृताः॥शिवप्रियतमा नित्यं शिवलक्षणलक्षिताः॥९४॥ सौम्याधारास्तथा मिश्राश्चांतरालद्वयात्मिकाः ॥ विरूपाश्च सुरूपाश्च नानारूपधरास्तथा॥९५॥सत्कृत्य शिवयोराज्ञां ते मे कामं दिशंतु वै ॥ देव्या प्रियसखीवर्गो देवीलक्षणलक्षितः ॥९६॥ सहितो रुद्रकन्याभिः शक्तिभिश्चाप्यनेकशः ॥ तृतीयावरणे शंभोर्भक्त्या नित्यं समर्चितः ॥ ९७ ॥ सत्कृत्य शिवयोराज्ञां स मे दिशतु मंगलम् ॥ दिवाकरो महेशस्य मूर्त्तिर्दीप्तसुमंडलः ॥ ९८ ॥ निर्गुणो गुणसंकीर्णस्तथैव गुणकेवलः ॥ अविकारात्मकश्चाद्य एकस्सामान्यविक्रियः ॥९९॥ असाधारणकर्मा च सृष्टिस्थितिलयक्रमात् ॥ एवं त्रिधा चतुर्द्धा च विभक्ताः पंचधा पुनः ॥ १०० ॥ चतुर्थावरणे शंभोः पूजितश्चानुगैः सहः ॥ शिवप्रियः शिवासक्तः शिवपादार्चने रतः ॥ १०१ ॥ सत्कृत्य शिवयोराज्ञां स मे दिशतु मंगलम् ॥ दिवाकरषडंगानि दीप्ताद्याश्चाष्टशक्तयः॥१०२॥ आदित्यो भास्करो भानू रविश्चेत्यनुपूर्वशः॥अर्को ब्रह्मा तथा रुद्रो विष्णुश्चादित्यमूर्तयः ॥१०३॥ विस्तरासुतराबोधिन्याप्या



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

यिन्यपराः पुनः ॥ उषा प्रभा तथा प्राज्ञा संध्या चेत्यपि शक्तयः ॥ १०४ ॥ सोमादिकेतुपर्यंता ग्रहाश्च शिवभाविताः ॥ शिवयोराज्ञयानुन्ना मंगलं प्रदिशंतु मे ॥ १०५ ॥ अथवा द्वादशादित्यास्तथा द्वादश शक्तयः ॥ ऋषयो देवगंधर्वाः पन्नगाप्सरसां गणाः ॥ १०६ ॥ ग्रामण्यश्च तथा यक्षा राक्षसाश्चासुरास्तथा ॥ सप्तसप्तगणाश्चैते सप्तच्छंदोमया हयाः ॥ १०७ ॥ वालखिल्यादयश्चैव सर्वे शिवपदार्चकाः ॥ सत्कत्य शिवयोराज्ञां मंगलं प्रदिशंतु मे॥१०८॥ब्रह्माथ देवदेवस्य मूर्तिर्भूमण्डलाधिपः॥चतुःषष्टिगुणैश्वर्यो बुद्धितत्त्वे प्रतिष्ठितः॥१०९॥निर्गुणो गुणसंकीर्णस्तथैव गुणकेवलः ॥ अविकारात्मको देवस्ततस्साधारणः पुरः ॥११०॥ असाधारणकर्मा च सृष्टिस्थितिलयक्रमात् ॥ भुवं त्रिधा चतुर्द्धा च विभक्तः पंचधा पुनः ॥ १११ ॥ चतुर्थावरणे शंभो पूजितश्च सहानुगैः ॥ शिवप्रियः शिवासक्तश्शिवपादार्चने रतः ॥११२॥ सत्कृत्य शिवयोराज्ञां स मे दिशतु मंगलम् ॥ हिरण्यगर्भो लोकेशो विराट् कालश्च पूरुषः ॥ ११३ ॥ सनत्कुमारः सनकः सनंदश्चसनातनः ॥ प्रजानां पतयश्चैव दक्षाद्या ब्रह्मसूनवः ॥ ११४ ॥ एकादश सपत्नीका धर्मस्संकल्प एव च ॥ शिवार्चनरताश्चैते शिवभक्तिपरायणाः ॥ ११५ ॥ शिवाज्ञावशगास्सर्वे दिशंतु मम मंगलम् ॥ चत्वारश्च तथा वेदास्सेतिहासपुराणकाः ॥ ११६ ॥ धर्मशास्त्राणि विद्याभिर्वैदिकीभिस्समन्विताः ॥ परस्परविरुद्धार्थाः शिवप्रकृतिपादकाः ॥ ११७ ॥ सत्कृत्य शिवयोराज्ञां मंगलं प्रदिशंतु मे ॥ अथ रुद्रो महादेवः शंभोर्मूर्तिर्गरीयसी ॥ ११८ ॥ वाह्नेयमण्डलाधीशः पौरुषैश्वर्यवान्प्रभुः ॥ शिवाभिमानसंपन्नो निर्गुणस्त्रिगुणात्मकः ॥११९॥ केवलं सात्त्विकश्चापि राजसश्चैव तामसः॥अविकाररतः पूर्वं ततस्तु समविक्रियः ॥१२०॥ असाधारणकर्मा च सृष्ट्यादिकरणात्पृथक् ॥ ब्रह्मणोपि शिरश्छेत्ता जनकस्तस्य तत्सुतः ॥१२१॥ जनकस्तनयश्चापि विष्णोरपि नियामकः ॥ बोधकश्च तयोर्नित्यमनुग्रहकरः प्रभुः ॥ १२२ ॥ अंडस्यांतर्बहिर्वर्ती रुद्रो लोकद्वयाधिपः ॥ शिवप्रियः शिवासक्तः शिवपादार्चने रतः॥१२३॥शिवस्याज्ञां पुरस्कृत्य स मे दिशतु मंगलम् ॥ तस्य ब्रह्म षडंगानि विद्येशांतं तथाष्टकम् ॥ १२४ ॥ चत्वारो मूर्तिभेदाश्च शिवपूर्वाः शिवार्चकाः ॥ शिवो भवो हरश्चैव मृडश्चैव

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





तथापरः ॥ शिवस्याज्ञां पुरस्कृत्य मंगलं प्रदिशंतु मे॥१२५॥अथ विष्णुर्महेशस्य शिवस्यैव परा तनुः॥वारितत्त्वाधिपः साक्षादव्य क्तपदसंस्थितः॥१२६॥निर्गुणस्सत्त्वबहुलस्तथैव गुणकेवलः ॥ अविकाराभिमानी च त्रिसाधारणविक्रियः॥१२७॥असाधारणकर्मा च सृष्ट्यादिकरणात्पृथक्॥दक्षिणांगभवेनापि स्पर्द्धमानः स्वयंभुवा॥१२८॥आद्येन ब्रह्मणा साक्षात्सृष्टः स्रष्टा च तस्य तु ॥ अंड स्यांतर्बहिर्वर्ती विष्णुर्लोकद्वयाधिपः॥१२९॥असुरांतकरश्चक्री शक्रस्यापि तथानुजः॥प्रादुर्भूतश्च दशधा भृगुशापच्छलादिह॥१३०॥ भूभारनिग्रहार्थाय स्वेच्छयावातरक्षितौ ॥ अप्रमेयबलो मायी मायया मोहयञ्जगत् ॥१३१॥ मूर्तिं कृत्वा महाविष्णुं सदाविष्णुम थापि वा ॥ वैष्णवैः पूजितो नित्यं मूर्तित्रयमयासने ॥१३२॥ शिवप्रियः शिवासक्तः शिवपादार्चने रतः ॥ शिवस्याज्ञां पुरस्कृत्य स मे दिशतु मंगलम्॥१३३॥वासुदेवोऽनिरुद्धश्च प्रद्युम्नश्च ततः परः ॥ संकर्षणस्समाख्याताश्चतस्रो मूर्तयो हरेः ॥१३४॥ मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः ॥ रामत्रयं तथा कृष्णो विष्णुस्तुरगवक्रकः ॥१३५॥ चक्रं नारायणस्यास्त्रं पांचजन्यं च शार्ङ्ग कम् ॥ सत्कृत्य शिवयोराज्ञां मंगलं प्रदिशंतु मे ॥ १३६ ॥ प्रभा सरस्वती गौरी लक्ष्मीश्च शिवभाविता ॥ शिवयोः शासनादेता मंगलं प्रदिशंतु मे ॥ १३७ ॥ इन्द्रोऽग्निश्च यमश्चैव निर्ऋतिर्वरुणस्तथा ॥ वायुः सोमः कुबेरश्च तथेशानस्त्रिशूलधृक् ॥ १३८ ॥ सर्वे शिवार्चनरताः शिवसद्भावभाविताः ॥ सत्कृत्य शिवयोराज्ञां मंगलं प्रदिशंतु मे ॥१३९॥ त्रिशूलमथ वज्रं च तथा परशुसाय कौ ॥ खड्गपाशांकुशाश्चैव पिनाकश्चायुधोत्तमः ॥ १४० ॥ दिव्यायुधानि देवस्य देव्याश्चैतानि नित्यशः ॥ सत्कृत्य शिवयोराज्ञां रक्षां कुर्वंतु मे सदा ॥१४१॥ वृषरूपधरो देवः सौरभेयो महाबलः ॥ वडवाख्यानलस्पर्द्धी पञ्चगोमातृभिर्वृतः ॥१४२॥ वाहनत्वमा नुप्राप्तस्तपसापरमेशयोः ॥ तयोराज्ञां पुरस्कृत्य स मे कामं प्रयच्छतु ॥ १४३ ॥ नंदा सुनंदा सुरभिः सुशीला सुमनास्तथा ॥ पंचगोमातरस्त्वेताश्शिवलोके व्यवस्थिताः ॥१४४॥ शिवभक्तिपरा नित्यं शिवार्चनपरायणाः ॥ शिवयोः शासनादेव दिशंतु मम वांछितम् ॥१४५॥ क्षेत्रपालो महातेजा नील जी-तसन्निभः ॥ दंष्ट्राकरालवदनः स्फुरद्रक्ताधरोज्ज्वलः ॥१४६॥ रक्तोदूर्ध्वमूर्द्धजः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

श्रीमान्भ्रुकुटीकुटिलेक्षणः ॥ रक्तवृत्तत्रिनयनः शशिपन्नगभूषणः ॥ १४७ ॥ नग्नस्त्रिशूलपाशासिकपालोद्यतपाणिकः ॥ भैरवो भैरवैः सिद्धैर्योगिनीभिश्च संवृतः ॥१४८॥ क्षेत्रेक्षेत्रे समासीनः स्थितो यो रक्षकस्सताम् ॥ शिवप्रणामपरमः शिवसद्भावभावितः॥१४९॥ शिवाश्रितान्विशेषेण रक्षन्पुत्रानिवौरसान् ॥ सत्कृत्य शिवयोराज्ञां स मे दिशतु मङ्गलम् ॥ १५० ॥ तालजङ्घादयस्तस्य प्रथमावरणेर्चिताः ॥ सत्कृत्य शिवयोराज्ञां चत्वारः समवन्तु माम् ॥१५१॥ भैरवाद्याश्च ये चान्ये समंतात्तस्य वेष्टिताः ॥ तेऽपि मामनुगृह्णंतु शिवशासन गौरवात् ॥१५२॥ नारदाद्याश्च मुनयो दिव्या देवैश्च पूजिताः ॥ साध्या नागाश्च ये देवा जनलोकनिवासिनः ॥ १५३ ॥ विनिवृत्ताधिकाराश्च महर्लोकनिवासिनः ॥ सप्तर्षयस्तथान्ये वै वैमानिकगणैस्सह ॥ १५४ ॥ सर्वे शिवार्चनरताः शिवाज्ञावशवर्तिनः ॥ शिवयोराज्ञया मह्यं दिशंतु मम कांक्षितम्[1] ॥ १५५ ॥ गंधर्वाद्याः पिशाचांताश्चतस्रो देवयोनयः ॥ सिद्धा विद्याधराद्याश्च येऽपि चान्ये नभश्चराः ॥१५६॥ असुरा राक्षसाश्चैव पातालतलवासिनः ॥ अनंताद्याश्च नागेन्द्रा वैनतेयादयो द्विजाः ॥ १५७ ॥ कूष्मांडाः प्रेतवेताला ग्रहा भूतगणाः परे ॥ डाकिन्यश्चापि योगिन्य शाकिन्यश्चापि तादृशाः ॥ १५८ ॥ क्षेत्रारामगृहादीनि तीर्थान्यायतनानि च ॥ द्वीपाः समुद्रा नद्यश्च नदाश्चान्ये सरांसि च ॥ १५९ ॥ गिरयश्च सुमेर्वाद्याः काननानि समंततः ॥ पशवः पक्षिणो वृक्षाः कृमिकीटादयो मृगाः ॥ १६० ॥ भुवनान्यपि सर्वाणि भुवनानामधीश्वरः ॥ अण्डान्यावरणैस्सार्द्धं मासाश्च दश दिग्गजाः ॥१६१॥ वर्णाः पदानि मंत्राश्च तत्त्वान्यपि सहाधिपैः ॥ ब्रह्मांडधारका रुद्रा रुद्राश्चान्ये सशक्तिकाः ॥ १६२ ॥ यच्च किंचिज्जगत्यस्मिन्दृष्टं चानुमितं श्रुतम् ॥ सर्वे कामं प्रयच्छन्तु शिवयोरेव शासनात् ॥ १६३ ॥ अथ विद्या परा शैवी पशुपाशविमोचिनी ॥ पंचार्थसंज्ञिता दिव्या पशुविद्याबहिष्कृता ॥१६४॥ शास्त्रं च शिवधर्माख्यं धर्माख्यं च तदुत्तरम् ॥ शैवाख्यं शिवधर्माख्यं पुराणं श्रुतिसंमितम् ॥१६५॥ शैवागमाश्च ये चान्ये कामिकाद्याश्चतुर्विधाः ॥ शिवाभ्याम

१ सर्वाभिलाषमित्यर्थः ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





विशेषेण सत्कृत्येह समर्चिताः ॥ १६६ ॥ ताभ्यामेव समाज्ञाता ममाभिप्रेतसिद्धये ॥ कर्मेदमनुमन्यंतां सफलं साध्वनुष्ठितम् ॥ १६७ ॥ श्वेताद्या नकुलीशां ताः सशिष्याश्चापि देशिकाः ॥ तत्संततीया गुरवो विशेषाद्गुरवो मम ॥ १६८ ॥ शैवा माहेश्वराश्चैव ज्ञानकर्मपरायणाः ॥ कर्मेदमनुमन्यंतां सफलं साध्वनुष्ठितम् ॥ १६९ ॥ लौकिका ब्राह्मणास्सर्वे क्षत्रियाश्च विशः क्रमात् ॥ वेदवेदांगतत्त्वज्ञाः सर्वशास्त्रविशारदाः ॥ १७० ॥ सांख्या वैशेषिकाश्चैव यौगा नैयायिका नराः ॥ सौरा ब्रह्मास्तथा रौद्रा वैष्णवाश्चापरे नराः ॥१७१॥ शिष्टाः सर्वे विशिष्टा च शिवशासनयंत्रिताः ॥ कर्मेदमनुमन्यंतां ममाभिप्रेतसाधकम् ॥ १७२ ॥ शैवाः सिद्धांतमार्गस्थाः शैवाः पाशुपतास्तथा ॥ शैवा महाव्रतधराः शैवाः कापालिकाः परे ॥ १७३ ॥ शिवाज्ञापालकाः पूज्या ममापि शिवशासनात् ॥ सर्वे ममानुगृह्णंतु शंसंतु सफलक्रियाम् ॥१७४॥ दक्षिणज्ञाननिष्ठाश्च दक्षिणोत्तरमार्गगाः अविरोधेन वर्तंतां मंत्रश्रेयोऽर्थिनो मम ॥ १७५ ॥ नास्तिकाश्च शठाश्चैव कृतघ्नाश्चैव तामसाः ॥ पाषंडाश्चातिपापाश्च वर्तंतां दूरतो मम ॥ १७६ ॥ बहुभिः किं स्तुतैरत्र येऽपि केऽपिचिदास्तिकाः ॥ सर्वे मामनुगृह्णंतु संतः शंसंतु मंगलम् ॥ १७७ ॥ नमश्शिवाय सांबाय ससुतायादिहेतवे ॥ पंचावरणरूपेण प्रपंचेनावृताय ते ॥ १७८ ॥ इत्युक्त्वा दंडवद्भूमौ प्रणिपत्य शिवं शिवाम्॥ जपेत्पंचाक्षरीं विद्यामष्टोत्तरशतावराम्॥१७९॥तथैव शक्तिविद्यां च जपित्वा तत्समर्पणम्॥कृत्वा तं क्षमयित्वेशं पूजाशेषं समापयेत् ॥ १८० ॥ एतत्पुण्यतमं स्तोत्रं शिवयोर्हृदयंगमम् ॥ सर्वाभीष्टप्रदं साक्षाद्भुक्तिमुक्त्यैकसाधनम् ॥१८१॥ य इदंकीर्तयेन्नित्यं शृणुयाद्वा समाहितः ॥ स विधूयाशु पापानि शिवसायुज्यमाप्नुयात्॥१८२॥गोघ्नश्चैव कृतघ्नश्च वीरहा भ्रूणहापि वा॥शरणागतघाती च मित्रविश्रंभघातकः॥१८३॥दुष्टपापसमाचारो मातृहा पितृहापि वा ॥ स्तवेनानेन जप्तेन तत्तत्पापात्प्रमुच्यते ॥१८४॥ दुःखस्वप्नादिमहानर्थसूचकेषु भयेषु च ॥ यदि संकीर्तयेदेतन्न ततो नार्थभाग्भवेत् ॥१८५॥ आयुरारोग्यमैश्वर्यं यच्चान्यदपि वाञ्छितम् ॥ स्तोत्रस्यास्य जपे तिष्ठंस्ततत्सर्वं लभते नरः ॥ १८६ ॥ असंपूज्य शिवस्तोत्रं जपात्फलमुदाहृतम् ॥ संपूज्य च जपे तस्य फलं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वक्तुं न शक्यते ॥ १८७ ॥ आस्तामियं फलावाप्तिरस्मिन्संकीर्तिते सति ॥ सार्द्धं मंबिकया देवः श्रुत्वैवं दिवि तिष्ठति ॥ १८८ ॥ तस्मान्नभसि संपूज्य देवंदेवं सहोमया ॥ कृतांजलिपुटस्तिष्ठंस्तोत्रमेतदुदीरयेत्॥१८९॥इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शिवमहास्तोत्रवर्णनं नामैकत्रिंशोऽध्यायः ॥३१॥ उपमन्युरुवाच ॥ एतत्ते कथितं कृष्ण कर्मैहामुत्र सिद्धिदम् ॥ क्रियातपोजपध्यानसमुच्चयमयं परम् ॥१॥ अथ वक्ष्यामि शैवानामिहैव फलदं नृणाम् ॥ पूजाहोमजपध्यानतपोदानमयं महत् ॥ ॥ २ ॥ तत्र संसाधयेत्पूर्वं मन्त्रं मंत्रार्थवित्तमः॥दृष्टसिद्धिकरं कर्म नान्यथा फलदं यतः॥३॥सिद्धमन्त्रोऽप्यदृष्टेन प्रबलेन तु केनचित् ॥ प्रतिबन्धफलं कर्म न कुर्यात्सहसा बुधः ॥ ४ ॥ तस्य तु प्रतिबन्धस्य कर्तुं शक्येह निष्कृतिः ॥ परीक्ष्य शकुनाद्यैस्तदादौ निष्कृतिमाचरेत् ॥ ५ ॥ योऽन्यथा कुरुते मोहात्कर्मैहिकफलं नरः ॥ न तेन फलभाक्स स्यात्प्राप्नुयाच्चोपहास्यताम् ॥ ६ ॥ अविस्रब्धो न कुर्वीत कर्म दृष्टफलं क्वचित् ॥ स खल्वश्रद्धधानः स्यान्नाश्रद्धः फलमृच्छति ॥ ७ ॥ नापराधोस्ति देवस्य कर्मण्यपि तु निष्फले ॥ यथोक्तकारिणां पुंसामिहैव फलदर्शनात् ॥ ८ ॥ साधकः सिद्धमंत्रश्च निरस्तप्रतिबंधकः ॥ विश्वस्तः श्रद्धधानश्च कुर्वन्नाप्नोति तत्फलम् ॥ ९ ॥ अथवा तत्फलावाप्त्यै ब्रह्मचर्यरतो भवेत् ॥ रात्रौ हविष्यमश्नीयात्पायसं वा फलानि वा ॥ १० ॥ हिंसादि यन्निषिद्धं स्यान्न कुर्यान्मनसापि तत् ॥ सदा भस्मानुलिप्तां गस्सुवेषश्च शुचिर्भवेत्॥११॥इत्थमाचारवान्भूत्वा स्वानुकूले शुभेऽहनि ॥ पूर्वोक्तलक्षणे देशे पुष्पदामाद्यलंकृते॥१२॥ आलिप्य शकृ[1]ता भूमिं हस्तमानावरां यथा ॥ विलिखेत्कमले भद्रे दीप्यमानं स्वतेजसा ॥१३॥तप्तजांबूनदमयमष्टपत्रं सकेसरम् ॥ मध्ये कर्णिकया युक्तं सर्वरत्नैरलंकृतम्॥१४॥स्वाकारसदृशेनैव नालेन च समन्वितम् ॥ तादृशे स्वर्णनिर्माणे कंदे सम्यग्विधानतः ॥ ॥ १५ ॥ तत्राणिमादिकं सर्वं संकल्प्य मनसा पुनः ॥ रत्नजं वाथ सौवर्णं स्फटिकं वा सलक्षणम् ॥ लिङ्गं सवेदिकं चैव स्थापयित्वा विधानतः ॥ १६ ॥ तत्रावाह्य यजेद्देवं सांबं सगणमव्ययम् ॥ तत्र माहेश्वरी

१ गोरिति शेषः ।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





कल्प्या मूर्तिर्मूर्तिमतः प्रभोः ॥ १७ ॥ चतुर्भुजा चतुर्वक्त्रा सर्वाभरणभूषिता ॥ शार्दूलचर्मवसना किंचिद्विहसितानना ॥ १८ ॥ वरदाभयहस्ता च मृगटंकधरा तथा ॥ अथ वाष्टभुजा चिंत्या चिंतकस्य यथारुचि॥१९॥तदा त्रिशूलपरशुखड्गवज्राणि दक्षिणे ॥ वामे पाशांकुशौ तद्वत्खेटं नागं च बिभ्रती ॥ २० ॥ बालार्कसदृशप्रख्या प्रतिवक्त्रं त्रिलोचना ॥ तस्याः पूर्वमुखं सौम्यं स्वाकारसदृशप्रभम् ॥ २१ ॥ दक्षिणं नीलजीमूतसदृशं घोरदर्शनम् ॥ उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम् ॥ २२ ॥ पश्चिमं पूर्णचंद्राभं सौम्यमिंदुकलाधरम् ॥ तदंकमंडलारूढा शक्तिर्माहेश्वरी परा ॥ २३ ॥ महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥ मूर्तिं कृत्वैवमाकारां सकलीकृत्य च क्रमात् ॥ २४ ॥ मूर्तिमंतमथावाह्य यजेत्परमकारणम् ॥ स्नानार्थं कल्पयेत्तत्र पंचगव्यं तु कापिलम् ॥२५॥ पंचामृतं च पूर्णानि बीजानि च विशेषतः ॥ पुरस्तान्मण्डलं कृत्वा रत्नचूर्णाद्यलंकृतम् ॥ २६ ॥ कर्णिकायां प्रविन्यस्येदीशानकलशं पुनः ॥ सद्यादिकलशान्पश्चात्परितस्तस्य कल्पयेत् ॥ २७ ॥ ततो विद्येशकलशानष्टौ पूर्वादिवत्क्रमात् ॥ तीर्थाम्बुपूरितान्कृत्वा सूत्रेणावेष्ट्य पूर्ववत् ॥ २८ ॥ पुण्यद्रव्याणि निक्षिप्य समन्त्रं सविधानकम् ॥ दुकूलाद्येन वस्त्रेण समाच्छाद्य समंततः ॥२९॥ सर्वत्र मंत्रं विन्यस्य तत्तन्मंत्रपुरस्सरम् ॥ स्नानकाले तु संप्राप्ते सर्वमङ्गलनिस्वनैः ॥ ३० ॥ पंचगव्यादिभिश्चैव स्नापयेत्परमेश्वरम् ॥ ततः कुशोदकाद्यानि स्वर्ण रत्नोदकान्यपि ॥३१॥ गंधपुष्पादिसिद्धानि मन्त्रसिद्धानि च क्रमात् ॥ उद्धृत्योद्धृत्य मन्त्रेण तैस्तैस्स्नाप्य महेश्वरम् ॥ ३२ ॥ गंध पुष्पादिदीपांश्च पूजाकर्म समाचरेत् ॥ पलावरः स्यादालेप एकादशपलोत्तरः ॥ ३३ ॥ सुवर्णरत्नपुष्पाणि शुभानि सुरभीणि च ॥ नीलोत्पलाद्युत्पलानि बिल्वपत्राण्यनेकशः ॥ ३४ ॥ कमलानि च रक्तानि श्वेतान्यपि च शंभवे ॥ कृष्णागुरूद्भवो धूपः सकर्पूराज्यगुग्गुलः ॥ ३५ ॥ कपिलाघृतसंसिद्धा दीपाः कर्पूरवर्तिजाः ॥ पंचब्रह्मषडंगानि पूज्यान्यावरणानि च ॥ ३६ ॥ नैवेद्यः पयसा सिद्धः स गुडाज्यो महाचरुः ॥ पाटलोत्पलपद्माद्यैः पानीयं च सुगन्धितम् ॥ ३७ ॥ पंचसौगंधिकोपेतं तांबूलं च सुसंस्कृतम् ॥ सुवर्णरत्नसिद्धानि भूषणानि विशेषतः ॥ ३८ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वासांसि च विचित्राणि सूक्ष्माणि च नवानि च॥दर्शनीयानि देयानि गानवाद्यादिभिस्सह॥३९॥जपश्च मूलमंत्रस्य लक्षः परम संख्यया॥एकावरा त्र्युत्तरा च पूजा फलवशादिह ॥४०॥ दशसंख्यावरो होमः प्रतिद्रव्यं शतोत्तरः॥घोररूपश्शिवश्चिंत्यो मारणो च्चाटनादिषु॥४१॥शिवलिंगे शिवाग्नौ च ह्यन्यासु प्रतिमासु च ॥ चिंत्यस्सौम्यमनुश्शंभुः कार्ये शांतिकपौष्टिके ॥४२॥ आयसौ स्रुक्स्रुवौ कार्यौ मारणादिषु कर्मसु ॥ तदन्यत्र तु सौवर्णौ शांतिकाद्येषु कृत्स्नशः॥४३॥दूर्वया घृतगोक्षीरमिश्रया मधुना तथा ॥ चरुणा सघृतेनैव केवलं पयसापि वा ॥४४॥ जुहुयान्मृत्युविजये तिलै रोगोपशांतये॥घृतेन पयसा चैव कमलैर्वाथ केवलैः॥४५॥ समृद्धिकामो जुहुयान्महादारिद्र्यशांतये ॥ जातीपुष्पेण वश्यार्थी जुहुयात्सघृतेन तु॥४६॥घृतेन करवीरैश्च कुर्यादाकर्षणं द्विजः॥ तैलेनोच्चाटनं कुर्यात्स्तंभनं मधुना पुनः ॥ ४७ ॥ स्तंभनं सर्षपेणापि लशुनेन तु पातनम् ॥ ताडनं रुधिरेण स्यात्खर स्योष्ट्रस्य चोभयोः ॥ ४८ ॥ मारणोच्चाटने कुर्याद्रोहिबीजैस्तिलान्वितैः ॥ विद्वेषणं च तैलेन कुर्याल्लांगलकस्य तु ॥ ४९ ॥ बंधनं रोहिबीजेन सेनास्तंभनमेव च ॥ रक्तसर्षपसंमिश्रैर्होमद्रव्यैरशेषतः ॥ ५० ॥ हस्तयंत्रोद्भवैस्तैलैर्जुहुयादाभिचारिके ॥ कटुकी तुषसंयुक्तैः कार्पासास्थिभिरेव च ॥ ५१ ॥ सर्षपैस्तैलसंमिश्रैर्जुहुयादाभिचारिके ॥ ज्वरोपशांतिदं क्षीरं सौभाग्यफलदं तथा ॥ ५२ ॥ सर्वसिद्धिकरो होमः क्षौद्राज्यदधिभिर्युतैः ॥ क्षीरेण तंदुलैश्चैव चरुणा केवलेन वा ॥ ५३ ॥ शांतिकं पौष्टिकं वापि सप्तभिः समिदादिभिः ॥ द्रव्यैर्विशेषतो होमे वश्यमाकर्षणं तथा ॥५४॥ वश्यमाकर्षणं चैव श्रीप्रदं च विशेषतः ॥ बिल्वपत्रैस्तु हवनं शत्रोर्विजयदं तथा ॥ ५५ ॥ समिधः शांतिकार्येषु पालाशखदिरादिकाः ॥ करवीरार्कजाः क्रौर्ये कण्टकिन्यश्च विग्रहे ॥ ५६ ॥ प्रशांतः शांतिकं कुर्यात्पौष्टिकं च विशेषतः ॥ निर्घृणः क्रुद्धचित्तस्तु प्रकुर्यादाभिचारिकम् ॥ ५७ ॥ अतीवदुरव स्थायां प्रतीकारांतरं न चेत् ॥ आततायिनमुद्दिश्य प्रकुर्यादाभिचारिकम् ॥ ५८ ॥ स्वराष्ट्रपतिमुद्दिश्य न कुर्यादाभिचारिकम् ॥ यद्यास्तिकस्सुधर्मिष्ठो मान्यो वा योऽपि कोपि वा॥५९॥तमुद्दिश्यापि नो कुर्यादाततायिनमप्युत ॥ मनसा कर्म्मणा वाचा योऽपि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





कोपि शिवाश्रितः ॥ ६० ॥ स्वराष्ट्रपतिमुद्दिश्य शिवा श्रितमथापि वा ॥ कृत्वाभिचारिकं कर्म सद्यो विनिपतेन्नरः ॥६१॥ स्वराष्ट्रपालकं तस्माच्छिवभक्तं च कञ्चन ॥ न हिंस्यादभिचाराद्यैर्यदीच्छेत्सुखमात्मनः ॥ ६२ ॥ अन्यं कमपि चोद्दिश्य कृत्वा वै मारणादिकम् ॥ पश्चात्तापेन संयुक्तः प्रायश्चित्तंसमाचरेत् ॥ ६३ ॥ बाणलिंगेऽपि वा कुर्यान्निर्धनो धनवानपि ॥ स्वयंभूतेऽथ वा लिंगे आर्षके वैदिकेऽपि वा ॥ ६४ ॥ अभावे हेमरत्नानामशक्तौ च तदर्जने ॥ मनसैवाचरेदेतद्द्रव्यैर्वा प्रतिरूपकैः ॥ ६५ ॥ क्वचिदंशे तु यःशक्तस्त्वशक्तः क्वचिदंशके ॥ सोऽपि शक्त्यनुसारेण कुर्वंश्चेत्फलमृच्छति ॥ ६६ ॥ कर्मण्यनुष्ठितेऽप्यस्मिन्फलं यत्र न दृश्यते ॥ द्विस्त्रिर्वावर्त्तयेत्तत्र सर्वथा दृश्यते फलम् ॥ ६७ ॥ पूजोपयुक्तं यद्द्रव्यं हेमरत्नाद्यनुत्तमम् ॥ तत्सर्वं गुरवे दद्याद्दक्षिणां च ततः पृथक् ॥ ६८ ॥ स चेन्नेच्छति तत्सर्वं शिवाय विनिवेदयेत् ॥ अथवा शिवभक्तेभ्यो नान्येभ्यस्तु प्रदीयते॥६९॥ यः स्वयं साधयेच्छक्त्या गुर्वादिनिरपेक्षया ॥ सोऽप्येवमाचरेदत्र न गृह्णीयात्स्वयं पुनः ॥ ७० ॥ स्वयं गृह्णाति यो लोभात्पूजांगद्रव्यमुत्तमम्॥कांक्षितं न लभेन्मूढो नात्र कार्या विचारणा ॥७१॥ अर्चितं यत्तु तल्लिंगं गृह्णीयाद्वा नवा स्वयम् ॥ गृह्णीयाद्यदि तान्नित्यं स्वयं वान्योऽपि वार्चयेत् ॥ ७२ ॥ यथोक्तमेव कर्मैतदाचरेद्योऽनपायतः ॥ फलं व्यभिचरेन्नैवामित्यतः किं प्ररोचकम् ॥७३॥ तथाप्युद्देशतो वक्ष्ये कर्मणः सिद्धिमुत्तमम् ॥ अपि शत्रुभिराक्रांतो व्याधिभिर्वाप्यनेकशः ॥ ७४ ॥ मृत्योरास्यगतश्चापि मुच्यते निरपायतः ॥ पूजायतेऽतिकृपणो रिक्तो वैश्रवणायते ॥ ७५ ॥ कामायते विरूपोऽपि वृद्धोऽपि तरुणायते ॥ शत्रुर्मित्रायते सद्यो विरोधी किंकरायते ॥ ७६ ॥ विषायते यदमृतं विषमप्यमृतायते ॥ स्थलायते समुद्रोऽपि स्थलमप्यर्णवायते ॥ ७७ ॥ महीधरायते श्वभ्रं स च श्वभ्रायते गिरिः ॥ पद्माकरायते वह्निः सरो वैश्वानरायते ॥ ७८ ॥ वनायते यदुद्यानं तदुद्यानायते वनम् ॥ सिंहायते मृगः क्षुद्रः सिंहः क्रीडामृगायते ॥ ७९ ॥ स्त्रियोऽभिसारिकायन्ते लक्ष्मीः सुचरितायते ॥ स्वैरप्रेष्यायते वाणी कीर्तिस्तु गणिकायते ॥ ८० ॥ स्वैराचारायते मेधा वज्रं सूचीयते मनः ॥ महावातायते शक्तिर्बलं मत्तगजायते ॥ ८१ ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्तम्भायते समुद्योगैः शत्रुपक्षे स्थिता क्रिया ॥ शत्रुपक्षायतेऽरीणां सर्व एव सुहृज्जनः ॥ ८२ ॥ शत्रवः कुणपायन्ते जीवन्तोपि सबांधवाः ॥ आपन्नोऽपि गतारिष्टः स्वयं खल्वमृतायते ॥ ८३ ॥ रसाय नायते नित्यमपथ्यमपि सेवितम् ॥ अनिशं क्रियमाणापि रतिस्त्वभिनवायते ॥ ८४ ॥ अनागतादिकं सर्वं करस्थामलकायते ॥ यादृच्छिकफलायन्ते सिद्धयोऽप्यणिमादयः ॥ ८५ ॥ बहुनात्र किमुक्तेन सर्वकामार्थसिद्धिषु ॥ अस्मिन्कर्मणि निर्वृत्ते त्वनवाप्यं न विद्यते ॥ ८६ ॥ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे ऐहिकसिद्धिकर्मवर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ उपमन्युरुवाच ॥ अतःपरं प्रवक्ष्यामि केवलामुष्मिकं विधिम् ॥ नैतेन सदृशं किंचित्कर्मास्ति भुवनत्रये ॥ १ ॥ पुण्यातिशयसंयुक्तः सर्वैर्देवैरनुष्ठितः ॥ ब्रह्मणा विष्णुना चैव रुद्रेण च विशेषतः ॥ २ ॥ इंद्रादिलोकपालैश्च सूर्याद्यैर्नवभिर्ग्रहैः ॥ विश्वामित्रवसिष्ठाद्यैर्ब्रह्मविद्भिर्महर्षिभिः ॥ ३ ॥ श्वेतागस्त्यदधीचाद्यैरस्माभिश्च शिवाश्रितैः ॥ नंदीश्वरमहाकालभृंगीशाद्यैर्गणेश्वरैः ॥ ४ ॥ पातालवासिभिर्दैत्यैः शेषाद्यैश्च महोरगैः ॥ सिद्धैर्यक्षैश्च गंधर्वै रक्षोभूतपिशाचकैः ॥ ५ ॥ स्वंस्वं पदमनुप्राप्तं सर्वैरयमनुष्ठितः ॥ अनेन विधिना सर्वे देवा देवत्वमागताः ॥६॥ ब्रह्मा ब्रह्मत्वमापन्नो विष्णुर्विष्णुत्वमागतः ॥ रुद्रो रुद्रत्वमापन्न इंद्रश्चेन्द्रत्वमागतः॥७॥गणेशश्च गणेशत्वमनेन विधिना गतः ॥ सितचंदनतोयेन लिंगं स्नाप्य शिवं शिवाम् ॥ श्वेतैर्विकसितैः पद्मैः संपूज्य प्रणिपत्य च॥८॥तत्र पद्मासनं रम्यं कृत्वा लक्षणसंयुतम् ॥ विभवे सति हेमाद्यै रत्नाद्यैर्वा स्वशक्तितः ॥९॥ मध्ये केसरजालस्य स्थाप्य लिंगं कनीयसम् ॥ अंगुष्ठप्रतिमं रम्यं सर्वगन्धमयं शुभम् ॥ १० ॥ दक्षिणे स्थापयित्वा तु बिल्वपत्रैः समर्चयेत् ॥ अगुरुं दक्षिणे पार्श्वे पश्चिमे तु मनःशिलाम् ॥११॥ उत्तरे चंदनं दद्याद्धरितालं तु पूर्वतः ॥ सुगन्धैः कुसुमै रम्यैर्विचित्रैश्चापि पूजयेत् ॥१२॥ धूपं कृष्णागुरुं दद्यात्सर्वतश्च सगुग्गुलम् ॥ वासांसि चातिसूक्ष्माणि विकाशानि निवेदयेत् ॥ १३ ॥ पायसं घृतसंमिश्रं घृतदीपांश्च दापयेत् ॥ सर्वं निवेद्य मन्त्रेण ततो गच्छेत्प्रदक्षिणाम् ॥ १४ ॥ प्रणम्य भक्त्या देवेशं स्तुत्वा चान्ते क्षमापयेत् ॥ सर्वोपहारसंमिश्रं ततो लिंगं निवेदयेत् ॥१५॥ शिवाय शिवमन्त्रेण दक्षिणामूर्तिमाश्रितः ॥ एवं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





योऽर्चयते नित्यं पञ्चगन्धमयं शुभम् ॥१६॥ सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥ एतद्व्रतोत्तमं गुह्यं शिवलिंगमहाव्रतम् ॥१७॥ भक्तस्य ते समाख्यातं न देयं यस्यकस्यचित् ॥ देयं च शिवभक्तेभ्यः शिवेन कथितं पुरा ॥ १८ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे आमुष्मिककर्मविधिवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥ उपमन्युरुवाच ॥ नित्यनैमित्तिकात्का म्याद्या सिद्धिरिह कीर्तिता ॥ सा सर्वा लभ्यते सद्यो लिंगबेरप्रतिष्ठया ॥ १ ॥ सर्वो लिंगमयो लोकस्सर्वं लिंगे प्रतिष्ठितम् ॥ तस्मा त्प्रतिष्ठिते लिंगे भवेत्सर्वं प्रतिष्ठितम्॥२॥ब्रह्मणा विष्णुना वापि रुद्रेणान्येन केन वा ॥ लिंगप्रतिष्ठामुत्सृज्य क्रियते स्वपदस्थितिः ॥३॥ किमन्यदिह वक्तव्यं प्रतिष्ठां प्रति कारणम् ॥ प्रतिष्ठितं शिवेनापि लिंगं वैश्वेश्वरं यतः ॥ ४ ॥ तस्मात्सर्वप्रयत्नेन परत्रेह च शर्मणे ॥ स्थापयेत्परमेशस्य लिंगं बेरमथापि वा ॥५॥ श्रीकृष्ण उवाच ॥ किमिदं लिंगमाख्यातं कथं लिंगी महेश्वरः ॥ कथं च लिंगभावोऽस्य कस्मादस्मिञ्छिवोऽर्च्यते ॥ ६ ॥ उपमन्युरुवाच ॥ अव्यक्तं लिंगमाख्यातं त्रिगुणप्रभवाप्ययम् ॥ अनाद्यनंतं विश्वस्य यदुपादानकारणम् ॥ ७ ॥ तदेव मूलप्रकृतिर्माया च गगनात्मिका ॥ तत एव समुत्पन्नं जगदेतच्चराचरम् ॥ ८ ॥ अशुद्धं चैव शुद्धं यच्छुद्धाशुद्धं च तत्रिधा ॥ ततः शिवो महेशश्च रुद्रो विष्णुः पितामहः ॥९॥ भूतानि चेन्द्रियैर्जाता लीयन्तेऽत्र शिवाज्ञया ॥ अतएव शिवो लिंगो लिंगमाज्ञापयेद्यतः ॥ १० ॥ यतो न तदनाज्ञातं कार्याय प्रभवेत्स्वतः ॥ ततो जातस्य विश्वस्य तत्रैव विलयो यतः ॥११॥ अनेन लिंगतां तस्य भवेन्नान्येन केनचित् ॥ लिंगं च शिवयोर्देहस्ताभ्यां यस्मादधिष्ठितम् ॥ १२ ॥ अतस्तत्र शिवः साम्बो नित्यमेव समर्चयेत् ॥ लिंगवेदी महादेवी लिंगं साक्षान्महेश्वरः ॥ १३ ॥ तयोः संपूजनादेव स च सा च समर्चितौ ॥ न तयोर्लिंगदेहत्वं विद्यते परमार्थतः ॥ १४ ॥ यतस्त्वेतौ विशुद्धौ तौ देहस्तदुपचारतः ॥ तदेव परमा शक्तिः शिवस्य परमात्मनः ॥ १५ ॥ शक्तिराज्ञां यदादत्ते प्रसूते तच्चराचरम् ॥ न तस्य महिमा शक्यो वक्तुं वर्षशतैरपि ॥१६॥ येनादौ मोहितौ स्यातां ब्रह्मनारायणावपि ॥ पुरा त्रिभुवनस्यास्य प्रलये समुपस्थिते ॥ १७ ॥ वारिशय्यागतो विष्णुः सुष्वापानाकुलः सुखम् ॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

यदृच्छया गतस्तत्र ब्रह्मा लोकपितामहः ॥ १८ ॥ ददर्श पुण्डरीकाक्षं स्वपन्तं तमनाकुलम् ॥ मायया मोहितः शम्भोर्विष्णुमाह पितामहः ॥ १९ ॥ कस्त्वं वदेत्यमर्षेण प्रहृत्योत्थाप्यमाधवम् ॥ स तु हस्तप्रहारेण तीव्रेणाभिहतः क्षणात् ॥२०॥ प्रबुद्धोत्थाय शयनाद्ददर्श परमेष्ठिनम् ॥ तमाह चांतस्संक्रुद्धः स्वयमक्रुद्धवद्धरिः ॥ २१ ॥ कुतस्त्वमागतो वत्स कस्मात्त्वं व्याकुलो वद ॥ इति विष्णुवचः श्रुत्वा प्रभुत्वगुणसूचकम् ॥ २२ ॥ रजसा बद्धवैरस्तं ब्रह्मा पुनरभाषत ॥ वत्सेति मां कुतो ब्रूषे गुरुः शिष्यमिवात्मनः ॥ २३ ॥ मां न जानासि किं नाथं प्रपंचो यस्य मे कृतिः ॥ त्रिधात्मानं विभज्येदं सृष्ट्वाथ परिपाल्यते ॥ २४ ॥ संहरामि नमे कश्चित्स्रष्टा जगति विद्यते ॥ इत्युक्ते सति सोऽप्याह ब्रह्माणं विष्णुरव्ययः ॥ २५ ॥ अहमेवादिकर्तास्य हर्ता च परिपालकः ॥ भवानपि ममैवांगादवतीर्णः पुराव्ययात् ॥ २६ ॥ मन्नियोगात्त्वमात्मानं त्रिधा कृत्वा जगत्त्रयम्॥सृजस्यवसि चांते तत्पुनः प्रतिसृजस्यपि ॥२७॥ विस्मृतोसि जगन्नाथं नारायणमनामयम् ॥ तवापि जनकं साक्षान्मामेवमवमन्यसे॥२८॥ तवापराधो नास्त्यत्र भ्रांतोसि मम मायया ॥ मत्प्रसादादियं भ्रांतिरपैष्यति तवाचिरात् ॥२९॥ शृणु सत्यं चतुर्वक्त्र सर्वदेवेश्वरो ह्यहम् ॥ कर्ता भर्ता च हर्ता च न मयास्ति समो विभुः ॥३०॥ एवमेव विवादोभूद्ब्रह्मविष्ण्वोः परस्परम् ॥ अभवच्च महायुद्धं भैरवं रोमहर्षणम् ॥३१॥ मुष्टिभिर्निघ्नतोस्तीव्रं रजसा बद्धवैरयोः ॥ तयोर्दर्पापहाराय प्रबोधाय च देवयोः ॥३२॥ मध्ये समाविरभवल्लिंगमैश्वरमद्भुतम् ॥ ज्वालामालासहस्राढ्यमप्रमेयमनौपमम्॥३३॥क्षयवृद्धिविनिर्मुक्तमादिमध्यांतवर्जितम् ॥ तस्य ज्वालासहस्रेण ब्रह्मविष्णू विमोहितौ ॥ ३४ ॥ विसृज्य युद्धं किं त्वेतदित्यचिंतयतां तदा ॥ न तयोस्तस्य याथात्म्यं प्रबुद्धमभवद्यदा॥३५॥तदा समुद्यतौ स्यातां तस्याद्यंतं परीक्षितुम्॥३६॥तत्र हंसाकृतिर्ब्रह्मा विश्वतः पक्षसंयुतः ॥ मनोनिलजवो भूत्वा गतस्तूर्द्ध्वं प्रयत्नतः ॥ ॥ ३७ ॥ नारायणोपि विश्वात्मा लीलाञ्जनचयोपमम् ॥ वाराहममितं रूपमस्थाय गतवानधः ॥ ३८ ॥ एवं वर्षसहस्रं तु त्वरन् विष्णुरधोगतः ॥ नापश्यदल्पमप्यस्य मूलं लिंगस्य सूकरः ॥ ३९ ॥ तावत्कालं गतश्चोर्द्ध्वं तस्यांतं ज्ञातुमिच्छया ॥ श्रांतोत्यंतम

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





दृष्टांतं पापताधः पितामहः॥४०॥तथैव भगवान् विष्णुः श्रांतः संविग्नलोचनः ॥ क्लेशेन महता तूर्णमधस्तादुत्थितोऽभवत्॥४१॥ समागतावथान्योन्यं विस्मयस्मेरवीक्षणौ ॥ मायया मोहितौ शंभोः कृत्याकृत्यं न जग्मतुः॥४२॥पृष्ठतः पार्श्वतस्तस्य चाग्रतश्च स्थितावुभौ॥प्रणिपत्य किमात्मेदमित्यचिंतयतां तदा ॥४३॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे हरिविधिमोहवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥३४॥ उपमन्युरुवाच ॥ अथाविरभवत्तत्र सनादं शब्दलक्षणम्॥ओमित्येकाक्षरं ब्रह्म ब्रह्मणः प्रतिपादकम् ॥१॥ तदप्यविदितं तावद्ब्रह्मणा विष्णुना तथा ॥ रजसा तमसा चित्तं तयोर्यस्मात्तिरस्कृतम् ॥२॥ तदा विभक्तमभवच्चतुर्द्धैकं तदक्षरम् ॥ अ उ मेति त्रिमात्राभिः परस्ताच्चार्द्धमात्रया ॥ ३ ॥ तत्राकारः श्रितो भागेज्वलल्लिंगस्य दक्षिणे ॥ उकारश्चोत्तरे तद्वन्मकारस्तस्य मध्यतः ॥४॥ अर्द्धमात्रात्मको नादः श्रूयते लिंगमूर्द्धनि ॥ विभक्तेऽपि तदा तस्मिन्प्रणवे परमाक्षरे॥५॥ विभागार्थं च तौ देवौ न किंचिदवजग्मतुः ॥ वेदात्मना तदाव्यक्तः प्रणवो विकृतिं गतः॥६॥तत्राकारो ऋगभवदुकारो यजुरव्ययः॥ मकारस्साम संजातो नादस्त्वाथर्वणी श्रुतिः ॥ ७ ॥ ऋगयं स्थापयामास समासात्त्वर्थमात्मनः ॥ रजोगुणेषु ब्रह्माणं मूर्तिष्वाद्यं क्रियास्वपि ॥८॥ सृष्टिं लोकेषु पृथिवीं तत्त्वेष्वात्मानमव्ययम्॥कलाध्वनि निवृत्तिं च सद्यं ब्रह्मसु पंचसु॥९॥ लिंगभागेष्वधोभागं बीजाख्यं कारणत्रये॥चतुः षष्टिगुणैश्वर्यं बौद्धं यदणिमादिषु॥१०॥तदित्थमर्थैर्दशभिर्व्याप्तं विश्वसृचा जगत्॥अथोपस्थापयामास स्वार्थं दशविधं यजुः ॥ ११ ॥ सत्त्वं गुणेषु विष्णुं च मूर्तिष्वाद्यं क्रियास्वपि ॥ स्थितिं लोकेष्वंतरिक्षं विद्यां तत्त्वेषु च त्रिषु॥१२॥ कलाध्वसु प्रतिष्ठां च वामं ब्रह्मसु पंचसु ॥ मध्यं तु लिंगभागेषु योनिं च त्रिषु हेतुषु ॥१३॥ प्राकृतं च यथैश्वर्यं तस्माद्विश्वं यजुर्मयम् ॥ ततोपस्थापयामास सामार्थं दशधात्मनः ॥१४॥ तमोगुणेष्वथो रुद्रं मूर्तिष्वाद्यं क्रियासु च ॥ संहृतिं त्रिषु लोकेषु तत्त्वेषु शिवमुत्तमम् ॥ १५ ॥ विद्याकलास्वघोरं च तथा ब्रह्मसु पंचसु ॥ लिंगभागेषु पीठोद्ध्वं बीजिनं कारणत्रये ॥ १६ ॥ पौरुषं च तथैश्वर्यमित्थं साम्ना ततं जगत् ॥ अथाथर्वाह नैर्गुण्यमर्थं प्रथममात्मनः ॥१७॥ ततो महेश्वरं साक्षान्मूर्तिष्वपि सदा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

शिवम् ॥ क्रियासु निष्क्रियस्यापि शिवस्य परमात्मनः ॥ १८ ॥ भूतानुग्रहणं चैव मुच्यंते येन जंतवः ॥ लोकेष्वपि यतो वाचो निवृत्ता मनसा सह ॥ १९ ॥ तदूर्ध्वमुन्मना लोकात्सोमलोकमलौकिकम् ॥ सोमस्सहोमया यत्र नित्यं निवसतीश्वरः ॥ २० ॥ तदूर्ध्वमुन्मना लोकाद्यं प्राप्तो न निवर्तते ॥ शांतिं च शांत्यतीतां च व्यापिकां वै कलास्वपि ॥ २१ ॥ तत्पूरुषं तथेशानं ब्रह्म ब्रह्मसु पंचसु ॥ मूर्द्धानमपि लिंगस्य नादभागेष्वनुत्तमम् ॥ २२ ॥ यत्रावाह्य समाराध्यः केवलो निष्कलः शिवः ॥ तत्तेष्वपि तदा बिंदो र्नादाच्छक्तेस्ततः परात् ॥ २३ ॥ तत्त्वादपि परं तत्त्व मतत्त्वं परमार्थतः ॥ कारणेषु त्रयातीतान्मायाविक्षोभकारणात् ॥ २४ ॥ अनंताच्छुद्धविद्यायाः परस्ताच्च महेश्वरात् ॥ सर्वविद्येश्वरा धीशान्न पराच्च सदाशिवात ॥ २५ ॥ सर्वमंत्रतनोर्देवाच्छक्तित्रयसमन्वितात् ॥ पंचवक्राद्दशभुजात्साक्षात्सकलनिष्कलात् ॥ २६ ॥ तस्मादपि पराद्बिंदोरर्द्धेंदोश्च ततः परात् ॥ ततः परान्निशाधीशान्नादाख्याच्च ततः परात् ॥२७॥ ततः परात्सुषुम्नेशाद्ब्रह्मरंध्रेश्वरादपि ॥ ततः परस्माच्छक्तेश्च परस्ताच्छिवतत्त्वतः ॥ २८ ॥ परमं कारणं साक्षात्स्वयं निष्कारणं शिवम् ॥ कारणानां च धातारं ध्यातारं ध्येयमव्ययम् ॥२९॥ परमाकाशमध्यस्थं परमात्मोपरि स्थितम् ॥ सर्वैश्वर्येण संपन्नं सर्वेश्वरमनीश्वरम् ॥ ३० ॥ ऐश्वर्याच्चापि मायेयादशुद्धान्मानुषादिकात् ॥ अपराच्च परात्त्याज्यादधिशुद्धाध्वगोचरात्॥३१॥तत्पराच्छुद्धविद्याद्यादुन्मनांतात्परात्परात् ॥ परमं परमैश्वर्यमुन्मनाद्यमनादि च ॥३२॥ अपारमपराधीनं निरस्तातिशयं स्थिरम् ॥ इत्थमर्थैर्दशविधैरियमाथर्वणी श्रुतिः ॥ ३३ ॥ यस्याद्गरीयसी तस्माद्विश्वं व्याप्तमथर्वणात् ॥ ऋग्वेदः पुनराहेदं जाग्रद्रूपं मयोच्यते ॥ ३४ ॥ येनाहमात्मतत्त्वस्य नित्यमस्म्यभिधायकः ॥ यजुर्वेदोऽवदत्तद्वत्स्वप्नावस्थामयोच्यते ॥३५॥ भोग्यात्मना परिणता विद्यावेद्या यतो मयि ॥ साम चाह सुषुप्त्याख्यमेवं सर्वं मयोच्यते ॥ ३६ ॥ ममार्थेन शिवेनेदं तामसेनाभिधीयते ॥ अथर्वाह तुरीयाख्यं तुरीयातीतमेव च ॥ ३७ ॥ मयाभिधीयते तस्मादध्वातीतपदोस्म्यहम् ॥ अध्वात्मकं तु त्रितयं शिवविद्यात्मसंज्ञितम् ॥३८॥ तत्त्रैगुण्यं त्रयीसाध्यं संशोध्यं च

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





पदैषिणा ॥ अध्वातीतं तुरीयाख्यं निर्वाणं परमं पदम् ॥३९॥ तदतीतं च नैर्गुण्यादध्वनोस्य विशोधकम् ॥ द्वयोः प्रमापको नादो नदांतश्च मदात्मकः ॥ ४० ॥ तस्मान्ममार्थस्वातंत्र्यात्प्रधानः परमेश्वरः ॥ यदस्ति वस्तु तत्सर्वं गुणप्रधान्ययोगतः ॥ ४१ ॥ समस्तं व्यस्तमपि च प्रणवार्थं प्रचक्षते॥सर्वार्थवाचकं तस्मादेकं ब्रह्मैतदक्षरम् ॥४२॥ तेनोमिति जगत्कृत्स्नं कुरुते प्रथमं शिवः ॥ शिवो हि प्रणवो ह्येष प्रणवो हि शिवः स्मृतः ॥४३॥ वाच्यवाचकयोर्भेदो नात्यंतं विद्यते यतः ॥ चिंतया रहितो रुद्रो वाचोयन्मनसा सह॥४४॥अप्राप्य तन्निवर्तंते वाच्यस्त्वेकाक्षरेण सः ॥ एकाक्षरादकाराख्यादात्मा ब्रह्माभिधीयते ॥४५॥ एकाक्षरादुकाराख्याद्विधा विष्णुरुदीर्यते ॥ एकाक्षरान्मकाराख्याच्छिवो रुद्र उदाहृतः ॥४६॥ दक्षिणांगान्महेशस्य जातो ब्रह्मात्मसंज्ञिकः ॥ वामांगादभवद्विष्णुस्ततो विद्येत् संज्ञितः ॥४७॥ हृदयान्नीलरुद्रो भूच्छिवस्य शिवसंज्ञिकः ॥ सृष्टेः प्रवर्तको ब्रह्मा स्थितेर्विष्णुर्विमोहकः ॥४८॥ संहारस्य तथा रुद्रस्तयोर्नित्यं नियामकः ॥ ४९ ॥ तस्मात्त्रयस्ते कथ्यंते जगतः कारणानि च ॥ कारणत्रयहेतुश्च शिवः परमकारणम्॥५०॥अर्थमेतमविज्ञाय रजसा बद्धवैरयोः ॥ युवयोः प्रतिबोधाय मध्ये लिंगमुपस्थितम् ॥५१॥ एवमोमिति मां प्राहुर्यदिहोक्तमथर्वणा ॥ ऋचो यजूंषि सामानि शाखाश्चान्याः सहस्रशः ॥५२॥ वेदेष्वेवं स्वयं वक्त्रैर्व्यक्तमित्यवदत्स्वपि ॥ स्वप्नानुभूतमिव तत्ताभ्यां नाध्यवसीयते ॥५३॥ तयोस्तत्र प्रबोधाय तमोपनयनाय च ॥ लिंगेपि मुद्रितं सर्वं यथा वेदैरुदाहृतम् ॥ ५४ ॥ तद्दृष्ट्वा मुद्रितं लिंगे प्रसादाल्लिंगिनस्तदा ॥ प्रशांतमनसौ देवौ प्रबुद्धौ संबभूवतुः ॥५५॥ उत्पत्तिं विलयं चैव यथात्म्यं च षडध्वनाम् ॥ ततः परतरं धाम धामवंतं च पूरुषम् ॥ ५६ ॥ निरुत्तरतरं ब्रह्म निष्कलं शिवमीश्वरम् ॥ पशुपाशमयस्यास्य प्रपंचस्य सदा पतिम् ॥ ५७ ॥ अकुतोभयमत्यंतमवृद्धिक्षयमव्ययम् ॥ बाह्यमाभ्यंतरं व्याप्तं बाह्याभ्यंतरवर्जितम् ॥ ५८ ॥ निरस्तातिशयं शश्वद्विश्वलोकविलक्षणम् ॥ अलक्षणमनिर्देश्यमवाङ्मनसगोचरम्॥५९॥प्रकाशैकरसं शांतं प्रसन्नं सततोदितम् ॥ सर्वकल्याणनिलयं शक्त्या तादृशयान्वितम् ॥६०॥ ज्ञात्वा देवं विरूपाक्षं ब्रह्मनारायणौ तदा॥रचयित्वांजलिं मूर्ध्नि भीतौ तौ वाच



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सूचतुः ॥६१॥ ब्रह्मोवाच ॥ अज्ञो वाहमभिज्ञो वा त्वयादौ देव निर्मितः ॥ ईदृशीं भ्रांतिमापन्न इति कोऽत्रापराध्यति॥६२॥ आस्तां ममेदमज्ञानं त्वयि सन्निहिते प्रभो ॥ निर्भयः कोऽभिभाषेत कृत्यं स्वस्य परस्य वा ॥ ६३ ॥ आवयोर्देवदेवस्य विवादोऽपि हि शोभनः॥पादप्रणामफलदो नाथस्य भवतो यतः ॥ ६४ ॥ ॥ विष्णुरुवाच ॥ स्तोतुं देव न वागस्ति महिम्नः सदृशी तव॥प्रभोरग्रे विधेयानां तूष्णींभावो व्यतिक्रमः ॥ ६५ ॥ किमत्र संघटेत्कृत्यमित्येवावसरोचितम्॥अजानन्नपि यत्किंचित्प्रलप्य त्वां नतोऽस्म्यहम् ॥६६॥कारणत्वं त्वया दत्तं विस्मृतं तव मायया ॥ मोहितोऽहंकृतश्चापि पुनरेवास्मि शासितः ॥ ६७ ॥ विज्ञापितैः किं बहुभिर्भीतोस्मि भृशमीश्वर॥ यतोऽहमपरिच्छेद्यं त्वां परिच्छेत्तुमुद्यतः ॥६८॥ त्वामुशंति महादेवं भीतानामार्तिनाशनम् ॥ अतोव्यतिक्रमं मेऽद्य क्षंतुमर्हसि शंकर ॥६९॥ इति विज्ञापितस्ताभ्यामीश्वराभ्यां महेश्वरः॥प्रीतोऽनुगृह्य तौ देवौ स्मितपूर्वमभाषत॥७०॥ ॥ ईश्वर उवाच॥वत्सवत्स विधे विष्णो मायया मम मोहितौ॥युवां प्रभुत्वेऽहंकृत्य बुद्धवैरो परस्परम्॥७१॥विवादं युद्धपर्यंतं कृत्वा नोपरतौ किल ॥ ततश्छिन्ना प्रजासृष्टिर्जगत्कारणभूतयोः॥७२॥अज्ञानमानप्रभवाद्वैमत्याद्युवयोरपि॥ तन्निवर्तयितुं युष्मद्दर्पमोहौ मयैव तु ॥७३॥ एवं निवारितावद्यलिंगाविर्भावलीलया ॥ तस्माद्भूयो विवादं च व्रीडां चोत्सृज्य कृत्स्नशः ॥ ७४ ॥ यथास्वं कर्म कुर्यातां भवंतौ वीतमत्सरौ ॥ पुरा ममाज्ञया सार्द्धं समस्त ज्ञानसंहिताः ॥७५॥ युवाभ्यां हि मया दत्ता कारणत्वप्रसिद्धये॥मंत्ररत्नं च सूत्राख्यं पंचाक्षरमयं परम्॥७६॥मयोपदिष्टं सर्वं तद्युवयोरद्य विस्मृतम् ॥ ददामि च पुनः सर्वं यथापूर्वं ममाज्ञया ॥ ७७ ॥ यतो विना युवां तेन न क्षमौ सृष्टिरक्षणे॥एवमुक्त्वा महादेवो नारायणपितामहौ॥७८॥मंत्रराजं ददौ ताभ्यां ज्ञानसंहितया सह ॥ तौ लब्ध्वा महतीं दिव्यामाज्ञां माहेश्वरीं पराम् ॥७९॥ महार्थं मंत्ररत्नं च तथैव सकलाः कलाः॥दंडवत्प्रणतिं कृत्वा देवदेवस्य पादयोः॥८०॥अतिष्ठतां वीतभयावानंदास्तिमितौ तदा ॥ एतस्मिन्नंतरे चित्रमिंद्रजालवदीश्वरम् ॥ ८१ ॥ लिंगं क्वापि तिरोभूतं न ताभ्यामुपलभ्यते ॥ ततो विलप्य हाहेति सद्यःप्रणयभंगतः॥८२॥किमसत्यमिदं वृत्तमिति चोक्त्वा परस्परम् ॥ अचिंत्यवैभवं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



शंभोर्विचिंत्य च गतव्यथौ ॥ ८३ ॥ अभ्युपेत्य परां मैत्रीमालिंग्य च परस्परम् ॥ जगद्व्यापारमुद्दिश्य जग्मतुर्देवपुंगवौ ॥८४॥ ततः प्रभृति शक्राद्याः सर्वं एव सुरासुराः ॥ ऋषयश्च नरा नागा नार्यश्चापि विधानतः ॥ लिंगप्रतिष्ठां कुर्वंति लिंगे तं पूजयंति च ॥ ८५ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे हरिविधिमोहनिवारणं नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥ श्रीकृष्ण उवाच ॥ भगवञ्छ्रोतुमिच्छामि प्रतिष्ठाविधिमुत्तमम् ॥ लिंगस्यापि च बेरस्य शिवेन विहितं यथा ॥१॥ उपमन्युरुवाच॥ अनात्मप्रतिकूले तु दिवसे शुक्लपक्षके ॥ शिवशास्त्रोक्तमार्गेण कुर्याल्लिंगं प्रमाणवत् ॥२॥ स्वीकृत्याथ शुभस्थानं भूपरीक्षां विधाय च॥दशोपचारान्कुर्वीत लक्षणोद्धारपूर्वकान्॥३॥तेषां दशोपचाराणां पूर्वं पूज्यं विनायकम्॥स्थानशुद्ध्यादिकं कृत्वालिंगं स्नानालयं नयेत् ॥ ४ ॥ शलाकया कांचनया कुंकुमादिरसाक्तया ॥ लक्षितं लक्षणं शिल्पशास्त्रेण विलिखेत्ततः ॥५॥ अष्टमृत्सलिलैर्वाथ पंच मृत्सलिलैस्तथा ॥ लिङ्गंपिंडिकया सार्द्धं पंचगव्यैश्च शोधयेत् ॥६॥ सवेदिकं समभ्यर्च्य दिग्याद्यं तु जलाशयम्॥नीत्वाधिवासये त्तत्र लिंगं पिंडिकया सह॥७॥ अधिवासालये शुद्धे सर्वशोभासमन्विते ॥ सतोरणे सावरणे दर्भमालासमावृते॥८॥ दिग्गजाष्टकसंपन्ने दिक्पालाष्टघटान्विते ॥ अष्टमंगलकैर्युक्ते कृतदिक्पालकार्चिते ॥ ९ ॥ तेजसं दारवं वापि कृत्वा पद्मासनांकितम् ॥ विन्यसेन्मध्यतस्तत्र विपुलं पीठकालयम् ॥ १० ॥ द्वारपालान्समभ्यर्च्य भद्रादींश्चतुरःक्रमात् ॥ समुद्रश्च विभद्रश्च सुनंदश्च विनंदकः ॥११॥ स्नापयित्वा समभ्यर्च्य लिंगं वेदिकया सह ॥ सकूर्चाभ्यां तु वस्त्राभ्यां समावेष्ट्यं समंततः ॥१२॥ प्रापय्य शनकैस्तोयं पीठिकोपरि शाययेत् ॥ प्राक्शिरस्कमधःसूत्रं पिंडिकां चास्य पश्चिमे॥१३॥ सर्वमंगलसंयुक्तं लिंगं तत्राधिवासयेत् ॥ पंचरात्रं त्रिरात्रं वाप्येकरात्रमथापि वा ॥१४॥ विसृज्य पूजितं तत्र शोधयित्वा च पूर्ववत् ॥ संपूज्योत्सवमार्गेण शयनालयमानयेत्॥१५॥तत्रापि शयनस्थानं कुर्यान्मंडलमध्यतः॥शुद्धैर्जलैः स्नापयित्वा लिंगमभ्यर्चयेत्क्रमात् ॥१६॥ ऐशान्यां पद्ममालिख्य शुद्धलिप्ते महीतले॥

१ ल्यबार्षः । २ डिढ्ढणञ्जिति ड़ीबभाव आर्षः ।





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

शिवकुंभं शोधयित्वा तत्रावाह्य शिवं यजेत् ॥ १७ ॥ वेदीमध्ये सितं पद्मं परिकल्प्य विधानतः ॥ तस्य पश्चिमतश्चापि चंडिकापद्ममालिखेत् ॥१८॥ क्षौमाद्यैर्वाहतैर्वस्त्रैः पुष्पैर्दर्भैरथापि वा ॥ प्रकल्प्य शयनं तस्मिन्हेमपुष्पं विनिक्षिपेत् ॥ १९ ॥ तत्र लिंगं समानीय सर्वमंगलनिःस्वनैः ॥ रक्तेन वस्त्रयुग्मेन सकूर्चेन समंततः॥२०॥सह पिंडिकयावेष्ट्य शाययेच्च यथा पुरा॥ पुरस्तात्पद्ममालिख्य तद्दलेषु यथाक्रमम् ॥२१॥ विद्येशकलशान्न्यस्येन्मध्ये शैवीं च वर्द्धनीम् ॥ परीत्य पद्मत्रितयं जुहुयुर्द्विजसत्तमाः ॥ २२ ॥ ते चाष्टमूर्त्तयः कल्प्याः पूर्वादिपरितः स्थिताः ॥ चत्वारश्चाथ वा दिक्षु स्वध्येतारस्सजापकाः ॥२३॥ जुहुयुस्ते विरंच्याद्याश्चतस्रो मूर्तयः स्मृताः ॥ दैशिकः प्रथमं तेषामैशान्यां पश्चिमेऽथ वा ॥२४॥ प्रधानहोमं कुर्वीत सप्तद्रव्यैर्यथाक्रमम् ॥ आचार्य्यात्पादमर्द्धं वा जुहुयुश्चापरे द्विजाः॥२५॥प्रधानमेकमेवात्र जुहुयादथ वा गुरुः ॥ पूर्वं पूर्णाहुतिं हुत्वा घृतेनाष्टोत्तरं शतम् ॥२६॥ मूर्ध्नि मूलेन लिंगस्य शिवहस्तं प्रविन्यसेत् ॥ शतमर्द्धं तदर्द्धं वा क्रमाद्द्रव्यैश्च सप्तभिः ॥२७॥ हुत्वाहुत्वा स्पृशेल्लिंगं वेदिकां च पुनःपुनः ॥ पूर्णाहुतिं ततो हुत्वा क्रमाद्द्याच्च दक्षिणाम् ॥२८॥ आचार्यात्पादमर्द्धं वा होतॄणां स्थपतेरपि ॥ तदर्द्धं देयमन्येभ्यः सदस्येभ्यश्च शक्तितः ॥ २९ ॥ ततः श्वभ्रे वृषं हैमं कूर्चं वापि निवेश्य च ॥ मृदंभसा पंचगव्यैः पुनः शुद्धजलेन च ॥ ३० ॥ शोधितां चंदनालिप्तां श्वभ्रे ब्रह्मशिलां क्षिपेत् ॥ करन्यासं ततः कृत्वा नवभिः शक्तिनामभिः ॥ ३१ ॥ हरितालादिधातूंश्च बीजगंधौषधैरपि ॥ शिवशास्त्रोक्तविधिना क्षिपेद्ब्रह्मशिलोपरि ॥३२॥ प्रतिलिंगं तु संस्थाप्य क्षीरं वृक्षसमुद्भवम् ॥ स्थितं बुद्ध्वा तदुत्सृज्य लिंगं ब्रह्मशिलोपरि ॥ ३३ ॥ प्रागुदक्प्रवरां किंचित्स्थापयेन्मूलविद्यया ॥ पिंडिकां चाथ संयोज्य शाक्तं मूलमनुस्मरन् ॥ ३४ ॥ बन्धनं बंधकद्रव्यैः कृत्वा स्थानं विशोध्य च ॥ दत्त्वा चार्घ्यं च पुष्पाणि कुर्युर्यवनिकां पुनः ॥३५॥ यथायोग्यं निषेकादि लिंगस्य पुरतस्तदा ॥ आनीय शयनस्थानात्कलशान्विन्यसेत्क्रमात् ॥३६॥ महापूजामथारभ्य संपूज्य कलशान्दश ॥ शिवमंत्रमनुस्मृत्य शिवकुंभजलांतरे ॥३७॥ अंगुष्ठानामिकायोगादादाय तमुदीरयेत् ॥ न्यसेदीशानभागस्य मध्ये लिंगस्य मंत्रवित् ॥ ३८ ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





शक्तिंन्यसेत्तथा विद्यां विद्येशांश्च यथाक्रमम् ॥ लिङ्गमूले शिवजलैस्ततो लिंगं निषेचयेत् ॥३९॥ वर्द्धन्यां पिंडिकालिंगं वि शक
लशैः पुनः ॥ अभिषिच्यासनं पश्चादाधाराद्यं प्रकल्पयेत् ॥४०॥ कृत्वा पंचकलान्यासं दीप्तं लिंगमनुस्मरेत् ॥ आवाहयेच्छिवौ
साक्षात्प्राञ्जलिः प्रागुदङ्मुखः ॥४१॥ वृषाधिराजमारुह्य विमानं वा नभस्तलात् ॥ अलंकृतं सहायांतं देव्या देवमनुस्मरन्॥सर्वाभ
रणशोभाढयं सर्वमंगलनिस्वनैः ॥४२॥ ब्रह्मविष्णुमहेशार्कशक्राद्यैर्देवदानवैः ॥ आनंदक्लिन्नसर्वांगैर्विन्यस्तांजलिमस्तकैः ॥ ४३ ॥
स्तुवद्भिरेव नृत्यद्भिर्नामद्भिरभितो वृतम् ॥ ततः पंचोपचारांश्च कृत्वा पूजां समापयेत् ॥४४॥ नातः परतरः कश्चिद्विधिः पञ्चोपचार
कात् ॥ प्रतिष्ठां लिंगवत्कुर्यात्प्रतिमास्वपि सर्वतः॥४५॥लक्षणोद्धारसमये कार्यं नयनमोचनम् ॥ जलाधिवासे शयने शाययेत्तान्त्व
धोमुखीम्॥४६॥कुम्भोदशायितां मंत्रैर्हृदि तां सन्नियोजयेत् ॥ कृतालयां परामाहुः प्रतिष्ठामकृतालयात् ॥ ४७ ॥ शक्तः कृतालयः
पश्चात्प्रतिष्ठाविधिमाचरेत ॥ अशक्तश्चेत्प्रतिष्ठाप्य लिंग बेरमथापि वा॥४८॥शक्तेरनुगुणं पश्चात्प्रकुर्वीत शिवालयम् ॥ गृहार्चा च
पुनर्वक्ष्ये प्रतिष्ठाविधिमुत्तमम् ॥४९॥ कृत्वा कनीयसंबेरं लिंगं वा लक्षणान्वितम् ॥ अयने चोत्तरे प्राप्ते शुक्लपक्षे शुभे दिने ॥५०॥
देवीं कृत्वा शुभे देशे तत्राब्जं पूर्ववल्लिखेत् ॥ विकीर्य पत्रपुष्पाद्यैर्मध्ये कुंभं निधाय च ॥५१॥ परितस्तस्य चतुरः कलशान् दिक्षु
विन्यसेत् ॥ पंच ब्रह्माणि तद्बीजैस्तेषु पंचसु पंचभिः ॥५२॥ न्यस्य संपूज्य मुद्रादि दर्शयित्वाभिरक्ष्य च ॥ विशोध्य लिंगं बेरं वा
मृत्तोयाद्यैर्यथा पुरा ॥५३॥ स्थापयेत्पुष्पसंछन्नमुत्तरस्थे वरासने ॥ निधाय पुष्पं शिरसि प्रोक्षयेत्प्रोक्षणीजलैः ॥ ५४ ॥ समभ्यर्च्य
पुनः पुष्पैर्जयशब्दादिपूर्वकम् ॥ कुम्भैरीशानविद्यांतैः स्नापयेन्मूलविद्यया ॥५५॥ ततः पंचकलान्यासं कृत्वा पूजां च पूर्ववत् ॥
नित्यमाराधयेत्तत्र देव्या देवं त्रिलोचनम्॥५६॥एकमेवाथ वा कुंभं मूर्तिमन्त्रसमन्वितम् ॥ न्यस्य पद्मांतरे सर्वं शेषं पूर्ववदाचरेत् ॥
॥ ५७ ॥ अत्यंतोपहतं लिंगं विशोध्य स्थापयेत्पुनः ॥ संप्रोक्षयेदुपहतमनाग्रुपहतं यजेत् ॥ ५८ ॥ लिंगानि बाणसंज्ञानि स्थापनी
यानि वा न वा ॥ तानि पूर्वं शिवेनैव संस्कृतानि यतस्ततः ॥ ५९ ॥ शेषाणि स्थापनीयानि यानि दृष्टानि बाणवत् ॥ स्वयमु



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

द्भूतलिंगे च दिव्ये चार्षे तथैव च ॥ ६० ॥ अपीठे पीठमावेश्य कृत्वा संप्रोक्षणं विधिम् ॥ यजेत्तत्र शिवं तेषां प्रतिष्ठा न विधीयते ॥ ६१ ॥ दग्धं श्लथं क्षतांगं च क्षिपेल्लिंगं जलाशये ॥ संधान योग्यं संधाय प्रतिष्ठाविधिमाचरेत् ॥६२॥ बेराद्वा विकलाल्लिंगाद्देवपूजापुरस्सरम् ॥ उद्वास्य हृदि संधानं त्यागं वायुक्रमाचरेत् ॥ ६३ ॥ एकाहपूजाविहतौ कुर्याद्द्विगुणमर्चनम्॥द्विरात्रे च महापूजां संप्रोक्षणमतः परम् ॥ ६४ ॥ मासादूर्ध्वमनेकाहं पूजा यदि विहन्यते ॥ प्रतिष्ठा प्रोच्यते कैश्चित्कैचित्संप्रोक्षणक्रमः ॥६५॥ संप्रोक्षणे तु लिंगादेर्देवमुद्वास्य पूर्ववत् ॥ अष्टपञ्चक्रमेणैवस्नापयित्वा मृदंभसा ॥६६॥ गवां रसैश्च संस्नाप्य दर्भतोयैर्विशोध्य च ॥ प्रोक्षयेत्प्रोक्षणीतोयैर्मूलेनाष्टोत्तरं शतम् ॥ ६७ ॥ सपुष्पं सकुशं पाणिं न्यस्य लिंगस्य मस्तके ॥ पंचवारं जपेन्मूलमष्टोत्तरशतं ततः ॥ ६८ ॥ ततो मूलेन मूर्द्धादिपीठांतं संस्पृशेदपि ॥ पूजां च महतीं कुर्याद्देवमावाह्य पूर्ववत् ॥६९॥ अलब्धे स्थापिते लिंगे शिवस्थाने जलेऽथ वा ॥ वह्नौ रवौ तथा व्योम्नि भगवंतं शिवं यजेत् ॥ ७० ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे प्रतिष्ठाविधिवर्णनं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ श्रीकृष्ण सवाच ॥ ज्ञाने क्रियायां चर्यायां सारमुद्धृत्य संग्रहात् ॥ उक्तं भगवता सर्वं श्रुतं श्रुतिसमं मया॥१॥इदानीं श्रोतुमिच्छामि योगं परमदुर्लभम् ॥ साधिकारं च सांगं च सविधिं सप्रयोजनम् ॥ २ ॥ यद्यस्ति मरणं पूर्वं योगाद्यनुपमर्दतः ॥ सद्यः साधयितुं शक्यं येन स्यान्नात्महा नरः ॥ ३ ॥ तच्च तत्कारणं चैव तत्कालकरणानि च ॥ तद्भेदतारतम्यं च वक्तुमर्हसि तत्त्वतः ॥ ४ ॥ उपमन्युरुवाच ॥ स्थाने पृष्टं त्वया कृष्ण सर्वप्रश्नार्थवेदिना॥ततः क्रमेण तत्सर्वं वक्ष्ये शृणु समाहितः ॥५॥ निरुद्धवृत्त्यतरस्यं शिवे चित्तस्य निश्चला ॥ या वृत्तिः स समासेन योगः स खलु पंचधा ॥ ६ ॥ मंत्रयोगःस्पर्शयोगो भावयोगस्तथापरः ॥ अभावयोगस्सर्वेभ्यो महायोगः परो मतः ॥ ७ ॥ मंत्राभ्यासवशेनैव मंत्रवाच्यार्थगोचरः ॥ अव्याक्षेपा मनोवृत्तिर्मंत्रयोग उदाहृतः ॥ ८ ॥ प्राणायाममुखा सैव स्पर्शे योगोभिधीयते ॥ स मंत्रस्पर्शनिर्मुक्तो भावयोगः प्रकीर्तितः ॥ ९ ॥ विलीनावयवं विश्वं रूपं संभाव्यते

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





यतः ॥ अभावयोगः संप्रोक्तोऽनाभासाद्वस्तुनः सतः ॥१०॥ शिवस्वभाव एवैकश्चिंत्यते निरुपाधिकः ॥ यथा शैवमनोवृत्तिर्महा
योग इहोच्यते ॥ ११ ॥ दृष्टे तथानुश्रविके विरक्तं विषये मनः ॥ यस्य तस्याधिकारोस्ति योगे नान्यस्य कस्यचित् ॥ १२ ॥
विषयद्वयदोषाणां गुणानामीश्वरस्य च ॥ दर्शनादेव सततं विरक्तं जायते मनः ॥ १३ ॥ अष्टांगो वा षडंगो वा सर्वयोगः समा
सतः ॥ यमश्च नियमश्चैव स्वस्तिकाद्यं तथासनम् ॥ १४ ॥ प्राणायामः प्रत्याहारो धारणा ध्यानमेव च ॥ समाधिरिति योगां
गान्यष्टावुक्तानि सूरिभिः ॥ १५ ॥ आसनं प्राणसंरोधः प्रत्याहारोथ धारणा ॥ ध्यानं समाधिर्योगस्य षडंगानि समासतः ॥१६॥
पृथग्लक्षणमेतेषां शिवशास्त्रे समीरितम्॥शिवागमेषु चान्येषु विशेषात्कामिकादिषु॥१७॥योगशास्त्रेष्वपितथा पुराणेष्वपि केषु च॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहः॥यम इत्युच्यते सद्भिः पंचावयवयोगतः॥१८॥शौचं तुष्टिस्तपश्चैव जपः प्रणिधिरेव च॥इति पंच
प्रभेदस्स्यान्नियमः स्वांशभेदतः॥१९॥स्वस्तिकं पद्ममध्येंदु वीरं योगं प्रसाधितम्॥पर्यंकं च यथेष्टं च प्रोक्तमासनमष्टधा ॥२०॥
प्राणः स्वदेहजो वायुस्तस्यायामो निरोधनम् ॥तद्रोचकं पूरकं च कुंभकं च त्रिधोच्यते॥२१॥नासिकापुटमंगुल्या पीडचैकमपरेण
तु ॥ औदरं रेचयेद्वायुं तथायं रेचकः स्मृतः ॥ २२ ॥ बाह्येन मरुता देहं दृतिवत्परिपूरयेत् ॥ नासापुटेनापरेण पूरणात्पूरकं
मतम् ॥ २३ ॥ न मुंचति न गृह्णाति वायुमंतर्बहिः स्थितम् ॥ संपूर्णं कुंभवत्तिष्ठेदचलः स तु कुंभक ॥ २४ ॥ रेचकाद्यं त्रयमिदं
न द्रुतं न विलंबितम् ॥ तद्यतः क्रमयोगेन त्वभ्यसेद्योगसाधकः ॥ २५ ॥ रेचकादिषु योभ्यासो नाडीशोधनपूर्वकः ॥ स्वेच्छो
त्क्रमणपर्यंतः प्रोक्तो योगानुशासने ॥ २६ ॥ कन्यकादिक्रमवशात्प्राणायामनिरोधनम्॥तच्चतुर्द्धोपदिष्टं स्यान्मात्रागुणविभागतः
॥ २७ ॥ कन्यकस्तु चतुर्द्धा स्यात्स च द्वादशमात्रकः ॥ मध्यमस्तु द्विरुद्घातश्चतुर्विंशतिमात्रकः ॥ २८ ॥ उत्तमस्तु त्रिरुद्घातः
षड्विंशन्मात्रकः परः ॥ स्वेदकंपादिजनकः प्राणायामस्तदुत्तरः ॥ २९ ॥ आनंदोद्भवरोमांचनेत्राश्रूणां विमोचनम् ॥ जल्पभ्रमण
मूर्छाद्यं जायते योगिनः परम्॥३०॥जानुं प्रदक्षिणीकृत्य न द्रुतं न विलंबितम् ॥ अंगुलीस्फोटनं कुर्यात्सा मात्रेति प्रकीर्तिता॥३१॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

मात्राक्रमेण विज्ञेयाश्चोद्घातक्रमयोगतः॥नाडीविशुद्धिपूर्वं तु प्राणायामं समाचरेत्॥३२॥अगर्भश्च सगर्भश्च प्राणायामो द्विधा स्मृतः॥ जपं ध्यानं विनागर्भः सगर्भस्तत्समन्वयात् ॥३३॥ अगर्भाद्गर्भसंयुक्तः प्राणायामः शताधिकः॥तस्मात्सगर्भं कुर्वन्ति योगिनः प्राणसंयमम्॥३४॥प्राणस्य विजयादेव जीयंते देहवायवः॥प्राणोऽपानः समानश्च ह्युदानो व्यान एव च ॥ ३५ ॥ नागः कूर्मश्च कृकलो देवदत्तो धनंजयः ॥ प्रयाणं कुरुते यस्मात्तस्मात्प्राणोऽभिधीयते॥३६॥अवाङ्नयत्यपानाख्यो यदाहारादि भुज्यते ॥ व्यानो व्यानशयत्यंगान्यशेषाणि विवर्धयन् ॥ ३७ ॥ उद्वेजयति मर्माणीत्युदानो वायुरीरितः समं नयति सर्वांगं समानस्तेन गीयते ॥ ३८ ॥ उद्गारे नाग आख्यातः कूर्म उन्मीलने स्थितः ॥ कृकलः क्षवथौ ज्ञेयो देवदत्तो विजृंभणे ॥३९॥ न जहाति मृतं चापि सर्वव्यापी धनंजयः ॥ क्रमेणाभ्यस्यमानोयं प्राणायामप्रमाणवान् ॥ ४० ॥ निर्दहत्यखिलं दोषं कर्तुर्देहं च रक्षति ॥ प्राणे तु विजिते सम्यक् तच्चिह्नान्युपलक्षयेत्॥४१॥विण्मूत्रश्लेष्मणां तावदल्पभावः प्रजायते॥बहुभोजनसामर्थ्यं चिरादुच्छ्वासनं तथा॥४२॥लघुत्वं शीघ्रगामित्वमुत्साहः स्वरसौष्ठवम् ॥ सर्वरोगक्षयश्चैव बलं तेजः सुरूपता॥४३॥धृतिर्मेधा युवत्वं च स्थिरता च प्रसन्नता ॥ तपांसि पापक्षयता यज्ञदानव्रतादयः ॥४४॥ प्राणायामस्य तस्यैते कलां नार्हन्ति षोडशीम्॥इन्द्रियाणि प्रसक्तानि यथास्वं विषयेष्विह ॥४५॥ आहृत्य यन्निगृह्णाति स प्रत्याहार उच्यते॥नमःपूर्वाणींद्रियाणि स्वर्गं नरकमेव च ॥४६॥ निगृहीतनिसृष्टानि स्वर्गाय नरकाय च ॥ तस्मात्सुखार्थी मतिमाञ्ज्ञानवैराग्यमास्थितः ॥४७॥ इंद्रियाश्वान्निगृह्याशु स्वात्मनात्मानमुद्धरेत्॥धारणा नाम चित्तस्य स्थानबन्धस्समासतः॥४८॥स्थानं च शिव एवैको नान्यद्दोषत्रयं यतः ॥ कालं कंचावधीकृत्य स्थानेऽवस्थापितं मनः ॥ ४९ ॥ न तु प्रच्यवते लक्ष्याद्धारणास्यान्न चान्यथा ॥ मनसः प्रथमं स्थैर्यं धारणातः प्रजायते ॥५०॥ तस्माद्धीरं मनः कुर्याद्धारणाभ्यासयोगतः ॥ ध्यै चिंतायां स्मृतो धातुः शिवचिंता मुहुर्मुहुः॥५१॥अव्याक्षिप्तेन मनसा ध्यानं नाम तदुच्यते ॥ ध्येयावस्थितचित्तस्य

१ दश वायव इति पाठान्तरम् ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



सदृशः प्रत्ययश्च यः ॥ ५२ ॥ प्रत्ययान्तरनिर्मुक्तः प्रवाहो ध्यानमुच्यते ॥ सर्वमन्यत्परित्यज्य शिव एव शिवंकरः ॥ ५३ ॥
परो ध्येयोऽधिदेवेशः समाप्ताथर्वणी श्रुतिः ॥ तथा शिवा परा ध्येया सर्वभूतगतौ शिवौ ॥ ५४ ॥ तौ श्रुतौ स्मृतिशास्त्रेभ्यः
सर्वगौ सर्वदोदितौ ॥ सर्वज्ञौ सततं ध्येयौ नानारूपविभेदतः ॥ ५५ ॥ विमुक्तिः प्रत्ययः पूर्वः प्रत्ययश्चाणिमादिकम् ॥
इत्येतद्द्विविधं ज्ञेयं ध्यानस्यास्य प्रयोजनम् ॥५६॥ ध्याता ध्यानं तथा ध्येयं यच्च ध्यानप्रयोजनम् ॥ एतच्चतुष्टयं ज्ञात्वा योगं
युञ्जीत योगवित् ॥ ५७ ॥ ज्ञानवैराग्यसंपन्नः श्रद्दधानः क्षमान्वितः ॥ निर्ममश्च सदोत्साही ध्यातेत्थंपुरुषः स्मृतः ॥ ५८ ॥
जपाच्छ्रांतः पुनर्ध्यायेद्ध्यानाच्छ्रांतः पुनर्जपेत् ॥ जपध्यानाभियुक्तस्य क्षिप्रं योगः प्रसिद्ध्यति॥५९॥धारणा द्वादशायामा ध्यानं
द्वादशधारणम् ॥ ध्यानद्वादशकं यावत्समाधिरभिधीयते ॥ ६० ॥ समाधिर्नाम योगांगमन्तिमं परिकीर्तितम् ॥ समाधिना च
सर्वत्र प्रज्ञालोकः प्रवर्तते ॥६१॥ यदर्थमात्रनिर्भासं स्तिमितो दधिवत्स्थितम् ॥ स्वरूपशून्यवद्भानं समाधिरभिधीयते ॥ ६२ ॥
ध्येये मनः समावेश्य पश्येदपि च सुस्थिरम् ॥ निर्वाणानलवद्योगी समाधिस्थः प्रगीयते ॥६३॥ न शृणोति न चाघ्राति न जल्पति
न पश्यति ॥ न च स्पर्शं विजानाति न संकल्पयते मनः ॥ ६४ ॥ नवाभिमन्यते किंचिद्बुध्यते न च काष्ठवत ॥ एवं शिवे विली
नात्मा समाधिस्थ इहोच्यते ॥ ६५ ॥ यथा दीपो निवातस्थः स्पन्दते न कदाचन ॥ तथा समाधिनिष्ठोऽपि तस्मान्न विचलेत्सुधीः
॥ ६६ ॥ एवमभ्यसतश्चारं योगिनो योगमुत्तमम् ॥ तदन्तराया नश्यंति विघ्नाः सर्वे शनैःशनै ॥ ६७ ॥ इति श्रीशिवमहापुराणे
सप्तम्यां वायवीयसंहितायां वायुनैमिषेयर्षिसंवादे उत्तरखण्डे योगगतिवर्णनं नान सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ उपमन्युरुवाच
आलस्यं व्याधयस्तीव्राः प्रमादः स्थानसंशयः ॥ अनवस्थितचित्तत्वमश्रद्धा भ्रांतिदर्शनम् ॥१॥ दुःखानि दौर्मनस्यं च विषयेषु च
लोलता ॥ दशैते युञ्जतां पुंसामन्तरायाः प्रकीर्तिताः॥२॥आलस्यमलसत्त्वं तु योगिनां देहचेतनोः ॥ धातुवैषम्यजा दोषा व्याधयः
कर्मदोषजाः ॥३॥ प्रमादो नाम योगस्य साधना नाम भावना ॥ इदं वेत्युभयाक्रान्तं विज्ञानं स्थानसंशयः॥४॥अप्रतिष्ठा हि मनस



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्त्वनवस्थितिरुच्यते ॥ अश्रद्धा भावरहिता वृत्तिर्वै योगवर्त्मनि ॥ ५ ॥ विपर्यस्ता मतिर्या सा भ्रांतिरित्यभिधीयते॥दुःखमज्ञानजं पुंसां चित्तस्याध्यात्मिकं विदुः॥ ६ ॥ आधिभौतिकमंगोत्थं यच्च दुःखं पुरा कृतैः॥आधिदैविकमाख्यातमशन्यस्त्रविषादिकम्॥७॥ इच्छाविघातजं मोक्षं दौर्मनस्यं प्रचक्षते ॥ विषयेषु विचित्रेषु विभ्रमस्तत्र लोलता॥८॥शान्तेष्वेतेषु विघ्नेषु योगासक्तस्य योगिनः ॥ उपसर्गाः प्रवर्तंते दिव्यास्ते सिद्धिसूचकाः ॥ ९ ॥ प्रतिभा श्रवणं वार्ता दर्शनास्वादवेदनाः ॥ उपसर्गाः षडित्येते व्यये योगस्य सिद्धयः ॥ १० ॥ सूक्ष्मे व्यवहितेऽतीते विप्रकृष्टे त्वनागते ॥ प्रतिभा कथ्यते योऽर्थे प्रतिभासो यथातथम् ॥ ११ ॥ श्रवणं सर्वशब्दानां श्रवणे चाप्रयत्नतः ॥ वार्ता वार्तासु विज्ञानं सर्वेषामेव देहिनाम् ॥१२॥ दर्शनं नाम दिव्यानां दर्शनं चाप्रयत्नतः ॥ तथास्वादश्च दिव्येषु रसेष्वास्वाद उच्यते ॥१३॥ स्पर्शनाधिगमस्तद्वद्वेदना नाम विश्रुता॥गन्धादीनां च दिव्यानामाब्रह्मभुवनाधिपाः ॥१४॥ संतिष्ठन्ते च रत्नानि प्रयच्छंति बहूनि च ॥ स्वच्छन्दमधुरा वाणी विविधास्यात्प्रवर्तते॥१५॥रसायनानि सर्वाणि दिव्याश्चौषधयस्तथा ॥ सिध्यंति प्रणिपत्यैनं दिशंति सुरयोषितः॥१६॥योगसिद्धयेकदेशेऽपि दृष्टे मोक्षे भवेन्मतिः ॥ दृष्टमेतन्मया यद्वत्तद्वन्मोक्षो भवेदिति ॥ १७ ॥ कृशता स्थूलता बाल्यं वार्द्धक्यं चैव यौवनम् ॥ नानाचातिस्वरूपं च चतुर्णां देहधारणम् ॥ १८ ॥ पार्थिवांशं विना नित्यं सुरभिर्गन्धसंग्रहः ॥ एवमष्टगुणं प्राहुः पैशाचं पार्थिवं पदम् ॥ १९ ॥ जले निवसनं चैव भूम्यामेवं विनिर्गमः॥इच्छेच्छक्तः स्वयं पातुं समुद्रमपि नातुरः ॥२०॥ यत्रेच्छति जगत्यस्मिंस्तत्रैव जलदर्शनम्॥विना कुम्भादिकं पाणौ जलसञ्चयधारणम्॥२१॥यद्वस्तु विरसञ्चापि भोक्तुमिच्छति तत्क्षणात्॥रसादिकं भवेच्चान्यत्त्रयाणां देहधारणम्।२२।निर्व्रणत्वं शरीरस्य पार्थिवैश्च समन्वितम् ॥ तदिदं षोडशगुणमाप्यमैश्वर्यमद्भुतम् ॥२३॥ शरीरादग्निनिर्माणं तत्तापभयवर्जनम् ॥ शक्तिर्जगदिदं दग्धुं यदीच्छेदप्रयत्नतः ॥२४॥ स्थापनं वानलस्याऽप्सु पाणौ पावकधारणम् ॥ दग्धे सर्गे यथापूर्वं मुखे चान्नादिपाचनम् ॥ द्वाभ्यां देहविनिर्माणमाप्यैश्वर्यसमन्वितम्॥२५॥एतच्चतुर्विंशतिधा तैजसं परिचक्षते॥मनोजवत्वं भूतानां क्षणादन्तःप्रवेशनम्॥२६॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





पर्व्वतादिमहाभारधारणञ्चाप्रयत्नतः ॥ गुरुत्वञ्चलघुत्वञ्च पाणावनिलधारणम् ॥२७॥ अंगुल्यग्रनिपाताद्यैर्भूमेरपि च कम्पनम्॥एकेन देहनिष्पत्तिर्युक्तं भोगैश्च तैजसैः ॥२८॥ द्वात्रिंशद्गुणमैश्वर्य्यं मारुतं कवयो विदुः॥छायाहीनविनिष्पत्तिरिन्द्रियाणामदर्शनम्॥२९॥ खेचरत्वं यथाकाममिन्द्रियार्थसमन्वयः ॥ आकाशलंघनं चैव स्वदेहे तन्निवेशनम् ॥३०॥ आकाशपिण्डीकरणमशरीरत्वमेव च ॥ अनिलैश्वर्यसंयुक्तं चत्वारिंशद्गुणं महत् ॥ ३१ ॥ ऐन्द्रमैश्वर्यमाख्यातमाम्बरं तत्प्रचक्षते ॥ यथाकामोपलब्धिश्च यथाकामविनिर्गमः ॥ ३२ ॥ सर्वस्याभिभवश्चैव सर्वगुह्यार्थदर्शनम् ॥ कर्मानुरूपनिर्माणं वशित्वं प्रियदर्शनम् ॥३३॥ संसारदर्शनं चैव भोगैरैन्द्रैस्समन्वितम् ॥ एतच्चांद्रमसैश्वर्यं मानसं गुणतोऽधिकम् ॥ ३४ ॥ छेदनं ताडनं चैव बंधनं मोचनं तथा ॥ ग्रहणं सर्वभूतानां संसारवशवर्तिनाम् ॥ ३५ ॥ प्रसादश्चापि सर्वेषां मृत्युकालजयस्तथा ॥ आभिमानिकमैश्वर्यं प्राजापत्यं प्रचक्षते ॥ ३६ ॥ एतच्चान्द्रमसैर्भोगैः षट्पञ्चाशद्गुणं महत् ॥ सर्गः संकल्पमात्रेण त्राणं संहरणं तथा ॥३७॥ स्वाधिकारश्च सर्वेषां भूतचित्तप्रवर्तनम् ॥ असादृश्यं च सर्वस्य निर्माणं जगतः पृथक्॥३८॥शुभाशुभस्य करणं प्राजापत्यैश्च संयुतम्॥चतुष्षष्ठिगुणं ब्राह्ममैश्वर्यं च प्रचक्षते ॥३९॥बौद्धादस्मात्परं गौणमैश्वर्यं प्राकृतं विदुः॥वैष्णवं तत्समाख्यातं तस्यैव भुवनस्थितिः॥ब्रह्मणा तत्पदं सर्वं वक्तुमन्यैर्न शक्यते ॥४०॥तत्पौरुषं च गौणं च गाणेशं पदमैश्वरम्॥विष्णुना तत्पदं किंचिज्ज्ञातुमन्यैर्न शक्यते॥४१॥विज्ञानसिद्धयश्चैव सर्वा एवौपसर्गिकाः ॥ निरोद्धव्या प्रयत्नेन वैराग्येण परेण तु ॥ ४२ ॥ प्रतिभासेष्वशुद्धेषु गुणेष्वासक्तचेतसः॥न सिध्येत्परमैश्वर्यमभयं सार्वकामिकम् ॥ ४३ ॥ तस्माद्गुणांश्च भोगांश्च देवासुरमहीभृताम् ॥ तृणवद्यस्त्यजेत्तस्य योगसिद्धिः परा भवेत् ॥४४॥ अथवानुग्रहेच्छायां जगतो विचरेन्मुनिः॥यथाकामंगुणान्भोगान्भुक्त्वा मुक्तिं प्रयास्यति॥४५॥अथ प्रयोगं योगस्य वक्ष्ये शृणु समाहितः ॥ शुभे काले शुभे देशे शिवक्षेत्रादिके पुनः ॥ विजने जंतुरहिते निःशब्दे बाधवर्जिते ॥४६॥ सुप्रलिप्ते स्थले सौम्ये गन्धधूपादिवासिते ॥ मुक्तपुष्पसमाकीर्णे वितानादि विचित्रिते॥४७॥कुशपुष्पसमित्तोयफलमूलसमन्विते॥नाग्न्यभ्याशे जलाभ्याशे शुष्कपर्णचयेऽपि वा॥४८॥



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

न दंशमशकाकीर्णे सर्पश्वापदसंकुले ॥ न च दुष्टमृगाकीर्णे न भये दुर्जनावृते ॥ ४९ ॥ श्मशाने चैत्यवल्मीके जीर्णागारे चतुष्पथे ॥ नदीनदसमुद्राणां तीरे रथ्यांतरेऽपि वा ॥ ५० ॥ न जीर्णोद्यानगोष्ठादौ नानिष्टे न च निंदिते ॥ नाजीर्णाम्लरसोद्गारे न च विण्मूत्रदूषिते ॥५१॥ नच्छर्द्यामातिसारे वा नातिभुक्तौ श्रमान्विते ॥ न चातिचिंताकुलितो न चातिक्षुत्पिपासितः ॥५२॥ नापि स्वगुरुकर्मादौ प्रसक्तो योगमाचरेत् ॥ युक्ताहारविहारश्च युक्तचेष्टश्च कर्मसु ॥ ५३ ॥ युक्तनिद्राप्रबोधश्च सर्वायासविवर्जितः ॥ आसनं मृदुलं रम्यं विपुलं सुसमं शुचि ॥ ५४ ॥ पद्मकस्वस्तिकादीनामभ्यसेदासनेषु च ॥ अभिवंद्य स्वगुर्वंतानभिवाद्याननुक्रमात् ॥ ५५ ॥ ऋजुग्रीवशिरोवक्षा नातिष्ठेच्छिष्टलोचनः ॥ किंचिदुन्नामितशिरा दंतैर्दंतान्न संस्पृशेत्॥५६॥दंताग्रसंस्थिता जिह्वामचलां सन्निवेश्य च ॥ पार्ष्णिभ्यां वृषणौ रक्षंस्तथा प्रजननं पुनः ॥५७॥ ऊर्वोरुपरि संस्थाप्य बाहू तिर्यगयत्नतः ॥ दक्षिणं करपृष्ठं तु न्यस्य वामतलोपरि॥५८॥उन्नाम्य शनकैः पृष्ठमुरो विष्टभ्य चाग्रतः॥संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥५९॥ संभृतप्राणसंचारः पाषाण इव निश्चलः ॥ स्वदेहायतनस्यांतर्विचिंत्य शिवमंबया ॥६०॥ हृत्पद्मपीठिकामध्ये ध्यानयज्ञेन पूजयेत् ॥ मूले नासाग्रतो नाभौ कंठे वा तालुरंध्रयोः ॥ ६१ ॥ भ्रूमध्ये द्वारदेशे वा ललाटे मूर्ध्नि वा स्मरेत् ॥ परिकल्प्य यथान्यायं शिवयोः परमासनम् ॥६२॥ तत्र सावरणं वापि निरावरणमेव वा ॥ द्विदलेषोडशारे वा द्वादशारे यथाविधि ॥६३॥ दशारे वा षडस्रे वा चतुरस्रे शिवं स्मरेत् ॥ भ्रुवोरंतरतः पद्मं द्विदलं तडिदुज्ज्वलम् ॥६४॥ भ्रूमध्यस्थारविन्दस्य क्रमाद्वै दक्षिणोत्तरे ॥ विद्युत्समानवर्णे च पर्णे वर्णावसानके ॥६५॥ षोडशारस्य पत्राणि स्वराः षोडश तानि वै ॥ पूर्वादीनि क्रमादेतत्पद्मं कन्दस्य मूलतः ॥ ६६ ॥ ककारादिटकारांता वर्णाः पर्णान्यनुक्रमात् ॥ भानुवर्णस्य पद्मस्य ध्येयं तद्धृदयान्तरे ॥ ६७ ॥ गोक्षीरधवलस्योक्ता डादिफान्ता यथाक्रमम् ॥ अधो दलस्याम्बुजस्य एतस्य च दलानि षट् ॥ ६८ ॥ विधूमांगारवर्णस्य वर्णा बाद्याश्च लान्तिमाः ॥ मूला

---

१ रूपमिति शेषः । २ सन्ध्यभाव आर्षः ।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





धारारविंदस्य हेमाभस्य यथाक्रमम् ॥ वकारादिसकारान्ता वर्णाः पर्णमयाः स्थिताः॥६९॥एतेष्वथारविंदेषु यत्रैवाभिरतं मनः॥तत्रव देवं देवीं च चिंतयेद्धीरया धिया॥७०॥अंगुष्ठमात्रममलं दीप्यमानं समंततः ॥ शुद्धदीपशिखाकारं स्वशक्त्या पूर्णमण्डितम्॥७१॥ इन्दुरेखासमाकारं ताराख्पमथापि वा॥नीवारशूकसदृशं बिससूत्राभमेव वा॥७२॥कदम्बगोलकाकारं तुषारकणि कोपमम्॥क्षित्यादि तत्त्वविजयं ध्याता यद्यपि वाञ्छति॥७३॥तत्तत्तत्त्वाधिपामेव मूर्तिं स्थूलां विचिंतयेत्॥सदाशिवांता ब्रह्माद्य भवाद्याश्चाष्टमूर्तयः॥७४॥ शिवस्य मूर्तयः स्थूलाः शिवशास्त्रे विनिश्चिताः ॥ घोरा मिश्रा प्रशान्ताश्च मूर्तयस्ता मुनीश्वरैः ॥ ७५ ॥ फलाभिलाषरहितै श्चिन्त्या श्चिन्ताविशारदैः ॥ घोराश्चेच्चिंतिताःकुर्युः पापरोगपरिक्षयम् ॥ ७६ ॥ चिरेण मिश्रे सौम्ये तु न सद्यो न चिरादपि ॥ सौम्ये मुक्तिर्विशेषेण शांतिः प्रज्ञा प्रसिध्यति ॥ ७७ ॥ सिध्यंति सिद्धयश्चात्र क्रमशो नात्र संशयः ॥ ७८ ॥ इति श्रीशिवमहा पुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे योगगतौ विघ्नोत्पत्तिवर्णनं नामाष्टत्रिंशोऽध्यायः ॥३८॥ उपमन्युरुवाच ॥ श्रीकंठ नाथं स्मरतां सद्यः सर्वार्थसिद्धयः ॥ प्रसिध्यंतीति मत्वैके तं वै ध्यायंति योगिनः ॥ १ ॥ स्थित्यर्थं मनसः केचित्स्थूलध्यानं प्रकुर्वते ॥ स्थूलं तु निश्चलं चेतो भवेत्सूक्ष्मे तु तत्स्थिरम् ॥ २ ॥ शिवे तु चिंतिते साक्षात्सर्वाः सिध्यन्ति सिद्धयः ॥ मूर्त्यंतरेषु ध्यातेषु शिवरूपं विचिंतयेत् ॥ ३ ॥ लक्षयेन्मनसःस्थैर्यं तत्तद्ध्यायेत्पुनः पुनः ॥ ध्यानमादौ सविषयं ततो निर्विषयं जगुः ॥४॥ तत्र निर्विषयं ध्यानं नास्तीत्येव सतां मतम् ॥ बुद्धेर्हि सन्ततिः काचिद्ध्यानमित्यभिधीयते ॥ ५ ॥ तेन निर्विषया बुद्धिः केवलेह प्रवर्तते ॥ तस्मात्सविषयं ध्यानं बालार्ककिरणाश्रयम् ॥ ६ ॥ सूक्ष्माश्रयं निर्विषयं नापरं परमार्थतः ॥ यद्वा सविषयं ध्यानं तत्साकारसमाश्रयम् ॥ ७ ॥ निराकारात्मसंवित्तिर्ध्यानं निर्विषयं मतम् ॥ निर्बीजं च सबीजं च तदेव ध्यानमुच्यते ॥ ८ ॥ निराकारश्रयत्वेन साकाराश्रयतस्तथा ॥ तस्मात्सविषयं ध्यानमादौ कृत्वा सबीजकम् ॥ ९ ॥ अंते निर्विषयं कुर्यान्निर्बीजं सर्वसि द्धये ॥ प्राणायामेन सिध्यंति देव्याः शांत्यादयः क्रमात् ॥ १० ॥ शांतिः प्रशांतिर्दीप्तिश्च प्रसादश्च ततः परम् ॥ शमः सर्वापदां



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

चैव शांतिरित्यभिधीयते ॥११॥ तमसोऽन्तर्बहिर्नाशः प्रशान्तिः परिगीयते ॥ बहिरन्तःप्रकाशो यो दीप्तिरित्यभिधीयते ॥१२॥ स्वस्थता या तु सा बुद्धः प्रसादःपरिकीर्तितः ॥ कारणानि च सर्वाणि संबाह्याभ्यंतराणि च ॥ १३ ॥ बुद्धेः प्रसादतः क्षिप्रं प्रसन्नानि भवन्त्युत ॥ ध्याता ध्यानं तथा ध्येयं यद्वा ध्यानप्रयोजनम् ॥ एतच्चतुष्टयं ज्ञात्वा ध्याता ध्यानं समाचरेत् ॥ १४ ॥ ज्ञानवैराग्यसंपन्नो नित्यमव्यग्रमानसः ॥ श्रद्दधानः प्रसन्नात्मा ध्याता सद्भिरुदाहृतः ॥१५॥ ध्यै चिंतायां स्मृतो धातुः शिवचिंता मुहुर्मुहुः ॥१६॥ योगाभ्यासस्तथाल्पोऽपि यथा पापं विनाशयेत् ॥ ध्यायतः क्षणमात्रं वा श्रद्धया परमेश्वरम् ॥१७॥ अव्याक्षिप्तेन मनसा ध्यानमित्यभिधीयते ॥१८॥ बुद्धिप्रवाहरूपस्य ध्यानस्यास्यावलंबनम् ॥ ध्येयमित्युच्यते सद्भिस्तच्च सांबः स्वयं शिवः ॥ ॥१९॥ विमुक्तिप्रत्ययं पूर्णमैश्वर्यं चाणिमादिकम् ॥ शिवध्यानस्य पूर्णस्य साक्षादुक्तं प्रयोजनम् ॥२०॥ यस्मात्सौख्यं च मोक्षं च ध्यानादभयमाप्नुयात् ॥ तस्मात्सर्वं परित्यज्य ध्यानयुक्तो भवेन्नरः ॥२१॥ नास्ति ध्यानं विना ज्ञानं नास्ति ध्यानमयोगिनः॥ ध्यानं ज्ञानं च यस्यास्ति तीर्णस्तेन भवार्णवः ॥ २२ ॥ ज्ञानं प्रसन्नमेकाग्रमशेषोपाधिवर्ज्जितम् ॥ योगाभ्यासेन युक्तस्य योगिनस्त्वेव सिध्यति ॥ २३ ॥ प्रक्षीणाशेषपापानां ज्ञाने ध्याने भवेन्मनिः ॥ पापोपहतबुद्धीनां तद्वार्तापि सुदुर्लभा ॥२४॥ यथावह्निर्महादीप्तः शुष्कमार्द्रं च निर्दहेत ॥ तथा शुभाशुभं कर्म ध्यानाग्निर्दहते क्षणात्॥२५॥अत्यल्पोऽपि यथा दीपः सुमहन्नाशयेत्तमः॥योगाभ्यासस्तथाल्पोऽपि महापापं विनाशयेत ॥२६॥ ध्यायतः क्षणमात्रं वा श्रद्धया परमेश्वरम्॥यद्भवेत्सुमहच्छ्रेयस्तस्यांतो नैव विद्यते॥२७॥ नास्ति ध्यानसमं तीर्थं नास्ति ध्यानसमं तपः॥नास्ति ध्यानसमो यज्ञस्तस्माद्ध्यानं समाचरेत्॥२८॥तीर्थानि तोयपूर्णानि देवान्पाषाणमृन्मयान्॥योगिनो न प्रपद्यंते स्वात्मप्रत्ययकारणात्॥२९॥योगिनां च वपुः सूक्ष्मं भवेत्प्रत्यक्षमैश्वरम्॥यथा स्थूलमयुक्तानां मृत्काष्ठाद्यैः प्रकल्पितम् ॥३०॥ यथेहांतश्चरा राज्ञः प्रियाः स्युर्न बहिश्चराः॥तथांतर्ध्याननिरताः प्रियाश्शंभोर्न कर्मिणः॥३१॥बहि



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





स्करा यथा लोके नातीव फलभोगिनः॥दृष्ट्वा नरेन्द्रभवने तद्वदत्रापि कर्मिणः॥३२॥यद्यंतरा विपद्यंते ज्ञानयोगार्थमुद्यतः॥योगस्यो द्योगमात्रेण रुद्रलोकं गमिष्यति ॥३३॥ अनुभूय सुखं तत्र स जातो योगिनां कुले ॥ ज्ञानयोगं पुनर्लब्ध्वा संसारमतिवर्त्तते ॥३४॥ जिज्ञासुरपि योगस्य यां गति लभते नरः ॥ न तां गतिमवाप्नोति सर्वैरपि महामखैः ॥ ३५ ॥ द्विजानां वेदविदुषां कोटिं संपूज्य यत्फलम् ॥ भिक्षामात्रप्रदानेन तत्फलं शिवयोगिने ॥३६॥ यज्ञाग्निहोत्रदानेन तीर्थहोमेषु यत्फलम् ॥ योगिनामन्नदानेन तत्समस्तं फलंलभेत् ॥३७॥ ये चापवादं कुर्वंति विमूढाश्शिवयोगिनाम् ॥ श्रोतृभिस्ते प्रपद्यन्ते नरकेष्वामहीक्षयात् ॥३८॥ सति श्रोतरि वक्तास्यादपवादस्य योगिनाम् ॥ तस्माच्छ्रोता च पापीयान्दण्डचस्सुमहतां मतः ॥ ये पुनः सततं भक्त्या भजंति शिवयोगिनः ॥ ३९ ॥ ते विदंति महाभोगानंते योगं च शांकरम् ॥ भोगार्थिभिर्नरैस्तस्मात्संपूज्याः शिवयोगिनः ॥४०॥ प्रतिश्रयान्नपानाद्यैः शय्याप्रावरणादिभिः॥योगधर्मः ससारत्वादभेद्यः पापमुद्गरैः ॥४१॥ वज्रतंदुलवज्ज्ञेयं तथा पापेन योगिनः॥न लिप्यंते च तापौघैः पद्मपत्रं यथांभसा ॥ ४२ ॥ यस्मिन्देशे वसेन्नित्यं शिवयोगरतो मुनिः ॥ सोऽपि देशो भवेत्पूतः सपूत इति किं पुनः ॥ ४३ ॥ तस्मात्सर्वं परित्यज्य कृत्यमन्यद्विचक्षणः ॥ सर्वदुःखप्रहाणाय शिवयोगं समभ्यसेत् ॥४४॥ सिद्धयोगफलो योगी लोकानां हित काम्यया ॥ भोगान्भुक्त्वा यथाकामं विहरेद्वात्र वर्तताम् ॥ ४५ ॥ अथवा क्षुद्रमित्येव मत्व वैषयिकं सुखम् ॥ त्यक्त्वा विरागयोगे न स्वेच्छया कर्म मुच्यताम् ॥४६॥ यस्त्वासन्नां मृतिं मर्त्यो दृष्टारिष्टं च भूयसा ॥ स योगारम्भनिरतः शिवक्षेत्रं समाश्रयेत्॥४७॥ स तत्र निवसन्नेव यदि धीरमना नरः ॥ प्राणान्विनापि रोगाद्यैः स्वयमेव परित्यजेत्॥४८॥ कृत्वाप्यनशनं चैव हुत्वा चांगं शिवानले ॥ क्षिप्त्वा वा शिवतीर्थेषु स्वदेहमवगाहनात ॥४९॥ शिवशास्त्रोक्तविधिवत्प्राणान्यस्तु परित्यजेत् ॥ सद्य एव विसच्येत नात्र कार्या विचारणा ॥ ५० ॥ रोगाद्यैर्वाथ विवशः शिवक्षेत्रं समाश्रितः ॥ म्रियते यदि सोप्येवं मुच्यते नात्र संशयः ॥ ५१ ॥

१ उद्योगं कुर्वंत इत्यर्थः ।। २ न चासावात्मघातक इति पाठान्तरम् ।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

यथा हि मरणं श्रेष्ठमुशंत्यनशनादिभिः ॥ शास्त्रविश्रंभधीरेण मनसा क्रियते यतः ॥ ५२ ॥ शिवनिन्दारतं हत्वा पीडितः स्वयमेव वा ॥ यस्त्यजेद्दुस्त्यजान्प्राणान्न स भूयः प्रजायते ॥ ५३ ॥ शिवनिन्दारतं हंतुमशक्तो यः स्वयं मृतः ॥ सद्य एव प्रमुच्येत त्रिः सप्तकुलसंयुतः ॥ ५४ ॥ शिवार्थे यस्त्यजेत्प्राणाञ्छिवभक्तार्थमेव वा ॥ न तेन सदृशः कश्चिन्मुक्तिमार्गस्थितो नरः ॥ ५५ ॥ तस्माच्छीघ्रतरा मुक्तिस्तस्य संसारमंडलात् ॥ एतेष्वन्यतमोपायं कथमप्यवलम्ब्य वा ॥ ५६ ॥ षडध्वशुद्धिं विधिवत्प्राप्तो वा म्रियते यदि ॥ पशूनामिव तस्येह न कुर्यादौर्ध्वदैहिकम् ॥५७॥ नैवाशौचं प्रपद्येत तत्पुत्रादिर्विशेषतः ॥ शिवचारार्थमथवा शिवविद्यार्थमेव वा ॥ खनेद्वा भुवि तद्देहं दहेद्वा शुचिनाग्निना ॥ ५८ ॥ क्षिपेद्वाप्सु शिवास्वेव त्यजेद्वा काष्ठलोष्टवत ॥ अथैनमपि चोद्दिश्य कर्म चेत्कर्तुमीप्सितम्॥५९॥कल्याणमेव कुर्वीत शक्त्या भक्तांश्च तर्पयेत्॥धनं तस्य भजेच्छैवः शैवी चेतस्य सन्ततिः ॥ नास्ति चेत्तच्छिवे दद्यान्नदद्यात्पशु सन्ततिः ॥ ६० ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे शैवयोगवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥३९॥ श्रीसूत उवाच ॥ इति स विजितमन्योर्यादवेनोपमन्योरधिगतमभिधाय ज्ञानयोगं मुनिभ्यः ॥ प्रणतिमुपगतेभ्यस्तेभ्य उद्भावितात्मा सपदि वियति वायुः सायमन्तर्हितोऽभूत् ॥ १ ॥ ततः प्रभातसमये नैमषीयास्तपोधनाः ॥ सत्रान्तेऽवभृथं कर्तुं सर्व एव समुद्ययुः ॥ २ ॥ तदा ब्रह्मसमादेशाद्देवी साक्षात्सरस्वती ॥ प्रसन्ना स्वादुसलिला प्रावर्तत नदी शुभा ॥ ३ ॥ सरस्वतीं नदीं दृष्ट्वा मुनयो हृष्टमानसाः ॥ समाप्य सत्रं प्रारब्धं चक्रुस्तत्रावगाहनम् ॥ ४ ॥ अथ संतर्प्य देवादींस्तदीयैः सलिलैः शिवैः ॥ स्मरन्तः पूर्वं वृत्तान्तं ययुर्वाराणसीं प्रति ॥ ५ ॥ तदा ते हिमवत्पादात्पंततीं दक्षिणामुखीम् ॥ दृष्ट्वा भगीरथी तत्र स्नात्वा तत्तीरतो ययुः ॥६॥ ततो वाराणसीं प्राप्य मुदितास्सर्व एव ते ॥ तदोत्तरप्रवाहायां गंगायामवगाह्य च ॥ ७ ॥ अविमुक्तेश्वरं लिंगं दृष्ट्वाभ्यर्च्य विधानतः ॥ प्रयातुमुद्यतास्तत्र ददृशुर्दिवि भास्वरम्॥८॥सूर्यकोटिप्रतीकाशं तेजोदिव्यं महाद्भुतम्॥ आत्मप्रभावितानेन व्याप्तसर्वदिगन्तरम् ॥९॥ अथ पाशुपताः सिद्धाः भस्मसञ्छन्नविग्रहाः॥मुनयोऽभ्येत्य शतशो लीनाः स्युस्तत्र

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





तेजसि ॥ १० ॥ तथा विलीयमानेषु तपस्विषु महात्मसु ॥ सद्यस्तिरोदधे तेजस्तदद्भुतमिवाभवत् ॥ ११ ॥ तद्दृष्ट्वा महदाश्चर्यं नैमिषीया महर्षयः ॥ किमेतदित्यजानन्तो ययुर्ब्रह्मवनं प्रति ॥ १२ ॥ प्रागेवैषां तु गमनात्पवनो लोकपावनः ॥ दर्शनं नैमिषीयाणां संवादस्तैर्महात्मनः ॥१३॥ शुद्धां बुद्धिं ततस्तेषां सांबे सानुचरे शिवे ॥ समाप्तिं चापि सत्रस्य दीर्घपूर्वस्य सत्रिणाम् ॥ १४ ॥ विज्ञाप्य जगतां धात्रे ब्रह्मणे ब्रह्मयोनये ॥ स्वकार्यं तदनुज्ञातो जगाम स्वपुरं प्रति ॥ १५ ॥ अथ स्थानगतो ब्रह्मा तुम्बुरोर्नारदस्य च ॥ परस्पर स्पर्द्धितयोर्गाने विवदमानयोः ॥ १६ ॥ तदुद्भावितगानोत्थरसैर्माध्यस्थमाचरन् ॥ गन्धर्वैरप्सरोभिश्च सुखमास्तेनिषेवितः ॥ ॥ १७ ॥ तदानवसरादेव द्वाःस्थैर्द्वारि निवारिताः ॥ मुनयो ब्रह्मभवनाद्बहिः पार्श्वमुपाविशन् ॥ १८ ॥ अथ तुम्बुरुणा गाने समतां प्राप्य नारदः ॥ साहचर्येष्वनुज्ञातो ब्रह्मणा परमेष्ठिना ॥१९॥ त्यक्त्वा परस्परस्पर्द्धां मैत्रीं च परमां गतः॥ सह तेनाप्सरोभिश्च गन्धर्वैश्च समावृतः ॥ २० ॥ उपवीणयितुं देवं नकुलीश्वरमीश्वरम् ॥ भवनान्निर्ययौ धातुर्जलदादंशुमानिव ॥ ॥ २१ ॥ तं दृष्ट्वा षट्कुलीयास्ते नारदं मुनिगोवृषम् ॥ प्रणम्यावसरं शंभोः पप्रच्छुः परमादरात् ॥ २२ ॥ स चावसर एवायमितो तर्गम्यतामिति ॥ वदन्यथावन्यपरस्त्वरया परया युतः ॥२३॥ ततो द्वारि स्थिता ये वै ब्रह्मणे तान्न्यवेदयन्॥तेन ते विविशुर्वेश्म पिंडीभूयांडजन्मनः ॥२४॥ प्रविश्य दूरतो देवं प्रणम्य भुवि दंडवत् ॥ समीपे तदनुज्ञाताः परिवृत्योपतस्थिरे ॥२५॥ तांस्तत्राव स्थितान् पृष्ट्वा कुशलं कमलासनः ॥ वृत्तांतं वो मया ज्ञातं वायुरेवाह नो यतः ॥२६॥ भवद्भिः किं कृतं पश्चान्मारुतेंतर्हिते सति ॥ इत्युक्तवति देवेशे मुनयोऽवभृथात्परम् ॥ २७ ॥ गंगातीर्थस्य गमनं यात्रां वाराणसीं प्रति ॥ दर्शनं तत्र लिंगानां स्थापितानां सुरेश्वरैः ॥ २८ ॥ अविमुक्तेश्वरस्यापि लिंगस्याभ्यर्चनं सकृत् ॥ आकाशे महतस्तस्य तेजोराशेश्च दर्शनम् ॥ २९ ॥ मुनीनां विलयं तत्र निरोधं तेजसस्ततः ॥ याथात्म्यवेदनं तस्य चिंतितस्यापि चात्मभिः ॥ ३० ॥ सर्वं सविस्तरं तस्मै प्रणम्याहुर्मुहुर्मुहुः ॥ मुनिभिः कथितं श्रुत्वा विश्वकर्मा चतुर्मुखः ॥३१॥ कंपयित्वा शिरः किंचित्प्राह गंभीरया गिरा ॥ प्रत्यासीदति युष्माकं



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सिद्धिरामुष्मिकी परा ॥३२॥ भवद्भिर्दीर्घसत्रेण चिरमाराधितःप्रभुः ॥ प्रसादभिमुखो भूत इति भूतार्थसूचितम् ॥३३॥ वाराणस्यां तु युष्माभिर्यद्दृष्टं दिवि दीप्तिमत् ॥ तल्लिंगसंज्ञितं साक्षात्तेजो माहेश्वरं परम् ॥३४॥ तत्र लीनाश्च मुनयः श्रौतपाशुपतव्रताः॥मुक्ता बभूवुः स्वस्थाश्च नैष्ठिका दग्धकिल्बिषाः ॥ ३५ ॥ प्राप्यानेन यथा मुक्तिरचिराद्भवतामपि ॥ स चायमर्थः सूच्येत युष्मद्दृष्टेन तेजसा ॥ ३६ ॥ तत्र वः काल एवैष दैवादुपनतः स्वयम् ॥ प्रयात दक्षिणं मेरोः शिखरं देवसेवितम् ॥ ३७ ॥ सनत्कुमारो यत्रास्ते मम पुत्रः परो मुनिः ॥ प्रतीक्ष्यागमनं साक्षाद्भूतनाथस्य नंदिनः ॥३८॥ पुरा सनत्कुमारोपि दृष्ट्वापि परमेश्वरम् ॥ अज्ञानात्सर्वयोगीन्द्रमानी विनयदूषितः ॥ ३९ ॥ अभ्युत्थानादिकं युक्तमकुर्वन्नतिनिर्भयः ॥ ततोऽपराधात्क्रुद्धेन महोष्ट्रो नंदिना कृतः ॥ ४० ॥ अथ कालेन महता तदर्थं शोचता मया ॥ उपास्य देवं देवीश्च नंदिनं चानुनीय वै ॥४१॥ कथंचिदुष्ट्रता तस्य प्रयत्नेन निवारिता॥ प्रापितो हि यथापूर्वं सनत्पूर्वां कुमारताम् ॥४२॥ तदाह च महादेवः स्मयन्निव गणाधिपम् ॥ अवज्ञाय हि मामेव तथाहंकृतवान्मुनिः ॥ ४३ ॥ अतस्त्वमेव याथात्म्यं ममास्मै कथयानघ ॥ ब्रह्मणः पूर्वजः पुत्रो मां मूढ इव संस्मरन् ॥ ४४ ॥ मयैव शिष्यते दत्तो मम ज्ञानप्रवर्तकः ॥ धर्माध्यक्षाभिषेकं च तव निर्वर्त्तयिष्यति ॥४५॥ स एवं व्याहृतो भूयस्सर्वभूतगणाग्रणीः ॥ यत्पुराज्ञापनं मूर्ध्ना प्रातः प्रतिगृहीतवान् ॥ ४६ ॥ तथा सनत्कुमारोऽपि मेरौ मदनुशासनात् ॥ प्रसादार्थं गणस्यास्य तपश्चरति दुश्चरम् ॥४७॥ द्रष्टव्यश्चेति युष्माभिः प्राग्गणेशसमागमात् ॥ तत्प्रसादार्थमचिरान्नंदी तत्रागमिष्यति ॥४८॥ इति सत्वरमादिश्य प्रेषिता विश्वयोगिना॥कुमारशिखरं मेरोर्दक्षिणं मुनयो ययुः॥४९॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तर खण्डे नैमिषर्षियात्रा वर्णनं नाम चत्वारिंशोऽध्यायः ॥४०॥ सूत उवाच॥ तत्र स्कंदसरो नाम सरस्सागरसन्निभम्॥ अमृतस्वादुशिशिरस्वच्छा गाधलघूदकम् ॥१॥ समंततः संघटितं स्फटिको पलसंचयैः ॥ सर्वर्तुकुसुमैः फुल्लैश्छादिताखिलदिङ्मुखम् ॥२॥ शैवलरुत्पलैः पद्मैः कुमुदैस्तारकोपमैः॥तरंगैरभ्रमसंकाशैराकाशमिव भूमिगम् ॥३॥ सुखावतरणारोहैः स्थलैर्नीलशिलामयैः॥सोपान मार्गैं रुचिरैश्शोभमानाष्टदि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





ङ्मुखम् ॥४॥ तत्रावतीर्णैश्च यथा तत्रोत्तीर्णैश्च भूयसा ॥ स्नातैः सितोपवीतैश्च शुक्लाकौपीनवल्कलैः॥५॥जटाशिखायनैर्मुंडैस्त्रिपुंड्रकृतमंडनै ॥ विरागविवशस्मेरमुखैर्मुनिकुमारकैः ॥६॥ घटैः कमलिनीपत्रपुटैश्च कलशैः शिवैः ॥ कमण्डलुभिरन्यैश्च तादृशैः करकादिभिः ॥७॥ आत्मार्थं च परार्थं च देवतार्थं विशेषतः ॥ आनीयमानसलिलमात्तपुष्पं च नित्यशः॥८॥अंतर्जलशिलारूढैर्नीचानां स्पर्शशंकया ॥ आचारवद्भिर्मुनिभिः कृतभस्मांगधूसरैः ॥९॥ इतस्ततोऽप्सु मज्जद्भिरिष्टशिष्टैः शिलागतैः ॥ तिलश्चै साक्षतैः पुष्पैस्त्यक्तदर्भपवित्रकैः ॥ १० ॥ देवाद्यमृषिमध्यं च निर्वर्त्य पितृतर्पणम् ॥ निवेदयेदभिज्ञेभ्यो नित्यस्नानगतान् द्विजान् ॥ ११ ॥ स्थानेस्थाने कृतानेकबलिपुष्पसमीरणैः ॥ सौरार्घ्यपूर्वं कुर्वद्भिःस्थंडलेभ्यर्चनादिकम् ॥ १२ ॥ क्वचिन्निमज्जदुन्मज्जत्प्रस्रस्तगजयूथपम् ॥ क्वचिच्च तृषयायातमृगीमृगतुरंगमम् ॥ १३ ॥ क्वचित्पीतजनोत्तीर्णमयूरवरवारणम् ॥ क्वचित्कृततटाघातवृषप्रतिवृषोज्ज्वलम् ॥ १४ ॥ क्वचित्कारंडवरवैः क्वचित्सारसकूजितैः ॥ क्वचिच्च कोकनिनदैः क्वचिद्भ्रमरगीतिभिः ॥ १५ ॥ स्नानपानादिकरणैः स्वसंपद्द्रुमजीविभिः ॥ प्रणयात्प्राणिभिस्तैस्तैर्भाषमाणमिवासकृत् ॥ १६ ॥ कूलशाखिशिखालीनकोकिलाकुलकूजितैः ॥ आतपोपहतान्सर्वान्नामंत्रयदिवानिशम् ॥१७॥ उत्तरे तस्य सरसस्तीरे कल्पतरोरधः ॥ वेद्यां वज्रशिलामय्यां मृदुले मृगचर्मणि ॥ १८ ॥ सनत्कुमारमासीनं शश्वद्बालवपुर्द्धरम् ॥ तत्कालमात्रोपरतं समाधेरचलात्मनः ॥१९॥ उपास्यमानं मुनिभिर्योगींद्रैरपि पूजितम् ॥ ददृशुर्नैमिषेयास्ते प्रणताश्चोपतस्थिरे ॥ २० ॥ यावत्पृष्टवते तस्मै प्रोचुः स्वागतकारणम् ॥ तुमुलः शुश्रुवे तावद्दिवि दुंदुभिनिस्वनः ॥ २१ ॥ ददृशे तत्क्षणे तस्मिन्विमानं भानुसन्निभम् ॥ गणेश्वरैरसंख्येयैः संवृतं च समंततः ॥ २२ ॥ अप्सरोगणसंकीर्णं रुद्रकन्याभिरावृतम् ॥ मृदंगमुरजोद्घुष्टं वेणुवीणारवान्वितम् ॥ २३ ॥ चित्ररत्नवितानाढ्यं मुक्तादामविराजितम् ॥ मुनिभिस्सिद्धगंधर्वैर्यक्षचारणकिन्नरैः ॥ २४ ॥ नृत्यद्भिश्चैव गायद्भिर्वादयद्भिश्च संवृतम् ॥ वीरगोवृषचिह्नेन विद्रुमद्रुमयष्टिना॥२५॥ कृतगोपुरसत्कारं केतुना मान्यहेतुना॥तस्य मध्ये विमानस्य चामरद्वितयांतरे॥२६॥ छत्रस्य मणिदंडस्य चंद्रस्येव शुचेरधः॥दिव्य



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सिंहासनारूढं देव्या सुयशया सह॥२७॥श्रिया च वपुषा चैव त्रिभिश्चापि विलोचनैः ॥ प्राकारैरभिकृत्यानां प्रत्यभिज्ञापकं प्रभोः ॥ ॥ २८ ॥ अविलंघ्य जगत्कर्तुराज्ञापनमिवागतम् ॥ सर्वानुग्रहणं शंभोः साक्षादिव पुरःस्थितम् ॥ २९ ॥ शिलादतनयं साक्षाच्छ्रीमच्छूलवरायुधम् ॥ विश्वेश्वरगणाध्यक्षं विश्वेश्वरमिवापरम् ॥ ३० ॥ विश्वस्यापि विधातृणां निग्रहानुग्रहक्षमम् ॥ चतुर्बाहुमुदारांगं चन्द्ररेखाविभूषितम् ॥३१॥ कंठे नागेन मौलौ च शशांकेनाप्यलंकृतम् ॥ सविग्रहमिवैश्वर्यं सामर्थ्यमिव सक्रियम् ॥ ३२ ॥ समाप्तमिव निर्वाणं सर्वज्ञमिव संगतम् ॥ दृष्ट्वा प्रहृष्टवदनो ब्रह्मपुत्रः सहर्षिभिः ॥३३॥ तस्थौ प्राञ्जलिरुत्थाय तस्यात्मानमिवार्पयन् ॥ अथ तत्रांतरे तस्मिन्विमाने चावनिं गते॥३४॥प्रणम्य दण्डवद्देवं स्तुत्वा व्यज्ञापयन्मुनीन्॥षट्कुलीया इमे दीर्घे नैमिषे सत्रमास्थिताः॥ आगता ब्रह्मणादिष्टाः पूर्वमेवाभिकांक्षया॥३५॥श्रुत्वा वाक्यं ब्रह्मपुत्रस्य नंदी छित्त्वा पाशान्दृष्टिपातेन सद्यः॥शैवं धर्मं चैश्वरं ज्ञानयोगं दत्त्वा भूयो देवपार्श्वं जगाम ॥३६॥ सनत्कुमारेण च तत्समस्तं व्यासाय साक्षाद्गुरवे ममोक्तम्॥ व्यासेन चोक्तं महितेन मह्यं मया च तद्वः कथितं समासात् ॥३७॥ नावेदविद्भ्यः कथनीयमेतत्पुराणरत्नं पुरशासनस्य॥ नाभक्तशिष्याय च नास्तिकेभ्यो दत्तं हि मोहान्निरयं ददाति ॥ ३८ ॥ मार्गेण सेवानुगतेन यैस्तद्दत्तं गृहीतं पठितं श्रुतं वा ॥ तेभ्यः सुखं धर्ममुखं त्रिवर्गं निर्वाणमंते नियतं ददाति ॥३९॥ परस्परस्योपकृतं भवद्भिर्मया च पौराणिकमार्ग्गयोगात्॥अतो गमिष्येऽहमवाप्तकामः समस्तमेवास्तु शिवं सदा नः॥४०॥ सूते कृताशिषि गते मुनयः सुवृत्ता यागे च पर्यवसिते महति प्रयागे ॥ काले कलौ च विषयैः कलुषायमाणे वाराणसीपरिसरे वसतिं वितेनुः ॥ ४१ ॥ अथ च ते पशुपाशमुमुक्षयाखिलतया कृतपाशुपतव्रताः ॥ अधिकृताखिलबोधसमाधयः परमनिर्वृतिमापुरनिंदिताः॥४२॥व्यास उवाच ॥ एतच्छिवपुराणं हि समाप्तं हितमादरात् ॥ पठितव्यं प्रयत्नेन श्रोतव्यं च तथैव हि ॥४३॥ नास्तिकाय न वक्तव्यमश्रद्धाय शठाय च ॥ अभक्ताय महेशस्य तथा धर्मध्वजाय च ॥४४॥ एतच्छ्रुत्या ह्येकवारं भवेत्पापं हि भस्मसात्॥अभक्तो भक्तिमाप्नोति भक्तो भक्तिसमृद्धिभाक् ॥ ४५ ॥ पुनः श्रुते च सद्भक्तिर्मुक्तिस्स्याच्च श्रुते पुनः ॥ तस्मात्पुनःपुनश्चैव श्रोतव्यं हि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





मुमुक्षुभिः ॥ ४६ ॥ पञ्चावृत्तिः प्रकर्तव्या पुराणस्यास्य सद्धिया ॥ परं फलं समुद्दिश्य तत्प्राप्नोति न संशयः ॥ ४७ ॥ पुरातनाश्च राजानो विप्रा वैश्याश्च सत्तमाः ॥ सप्तकृत्वस्तदावृत्त्यालभन्त शिवदर्शनम् ॥४८॥ श्रोष्यत्यथापि यश्चेदं मानवो भक्तितत्परः ॥ इह भुक्ताखिलान्भोगानंते मुक्तिं लभेच्च सः ॥ ४९ ॥ एतच्छिवपुराणं हि शिवस्यातिप्रियं परम् ॥ भुक्तिमुक्तिप्रदं ब्रह्मसंमितं भक्तिवर्द्धनम् ॥ ५० ॥ एतच्छिवपुराणस्य वक्तुः श्रोतुश्च सर्वदा ॥ सगणस्ससुतस्सांबश्शं करोतु स शंकरः ॥ ५१ ॥ इति श्रीशिवमहापुराणे सप्तम्यां वायवीयसंहितायामुत्तरखण्डे व्यासोपदेश श्रीशिवमहापुराणमाहात्म्यवर्णनं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

समाप्तोऽयं ग्रन्थः ॥

---

इदं पुस्तकं मोहमयीनगर्यां श्रीकृष्णदासात्मज–खेमराजश्रेष्ठिना निज "श्रीवेंकटेश्वर" मुद्रणयन्त्रालये
मुद्रितं प्रकाशितं च ॥ संवत् २०२१, सन् १९६५



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

# विदुषामभ्यर्थना।

अत्रास्माकं मुद्रणालये ऋग्वादयो वेदा उपनिषदो वेदान्तग्रन्था महाभारतादीतिहासाः श्रीमद्भागवतादिमहापुराणोप-पुराणानि धर्मशास्त्र–कर्मकाण्ड–व्याकरण–न्याय–योग–सांख्य–मीमांसादिशास्त्रीयग्रन्थाः काव्य–नाटक-चम्पू–प्रभृतयो ग्रन्थाः सहस्रनामाद्यनेकस्तोत्रग्रन्था विविधभाषाग्रन्थाश्च सीसकोत्तममहल्लघ्वक्षरैर्मनो-हरं मुद्रिता योग्यमूल्येन क्रय्याः सन्ति, तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः।

क्षेमराज-श्रीकृष्णदासः "श्रीवेङ्कटेश्वर" स्टीम्–मुद्रणालयाध्यक्षः, मुंबईस्थः।

मुद्रक और प्रकाशक-
**खेमराज श्रीकृष्णदास,**
अध्यक्ष–"श्रीवेङ्कटेश्वर" स्टीम्–प्रेस,–बम्बई.

पुनर्मुद्रणादि सर्वाधिकार "श्रीवेङ्कटेश्वर" मुद्रणयन्त्रालयाध्यक्षके अधीन है।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

